है, कि जिससे पुत्रजन्म हो। वैज्ञानिकों ने अपने शास्त्रों में पुंसवन संस्कार के अन्तर्गत ही (लक्ष्मणा, सहदेवी, वटशुंगा आदि) पौष्टिक औषधियाँ पुत्रोत्पादन के लिये स्त्रियों को सेवन करना बताया है [सुश्रुत सं० शारी० २।३४।। तथा चरक सं० शा० ८।३५।३६]। पुत्र ही तो अपना उत्तराधिकारी एवं पितरों की तृप्ति करने वाला होता है और उसी के द्वारा ही पितृ गण नरक योनि से मुक्त होकर सद्गति को प्राप्त होते हैं इसीलिए इसका नाम 'पुत्र' रक्खा गया है। यथा पुरु त्रायते पुत्रः निपरणाद् वा, पुन्नरकं ततस्त्रायते इति वा [निरुक्तोक्तिः] तथा चापुन्नाम नरकम्, अनेक शततारम्, तस्मात्त्राति तारयति वा पुत्रः [अथर्व० गोपथ ब्राह्मणे-] मनुस्मृति भी पुत्र शब्द का ही यही अर्थ प्रकट करती है [मनु०९।१३८] पुमांसं पुत्र माधेहि' [अथर्ववेद ६।१७।१०] अर्थात् गर्भ में पुत्र को धारण करो। 'पुमांसं पुत्रं जनय' [अथर्व० सं० ३।२३।३] इत्यादि वेद मन्त्रों द्वारा पुत्रप्राप्ति के लिए ही देवताओं से याचना की जाती है। क्योंकि पुत्रोत्पत्ति से ही पितरगण सन्तुष्ट होते हैं तथा सनातनी पिण्डोदक-क्रिया भी लुप्त होने नहीं पाती। तदनन्तर अष्टम मास में विष्णु पूजा करनी चाहिये।

## ❀ अथ सीमन्तोन्नयनम् ❀

तत्र गर्भमासापेक्षया षष्ठेऽष्टमे पुन्नामनक्षत्रयुते चन्द्रताराऽनुकूलविहितदिने श्रीगणेशपूजनपूर्वकं मातृपूजाभ्युद-

यिके कृत्वा, हस्ते जलाऽक्षतपुष्पद्रव्याण्यादाय । सङ्कल्पं कुर्य्यात्-

ॐ अद्याऽमुक गोत्रोत्पन्नोऽहम् अस्यां भार्यायां गर्भाऽभिवृद्धिपरिपन्थिशितप्रियऽ-लक्ष्मीभूतराक्षसगणनिरसन — क्षमसकला सौभाग्यनिदानभूतलक्ष्मीसमावेशनद्वारा - प्रतिगर्भबीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरं श्रीपरमेश्वरप्रीत्यर्थं स्त्रीसंस्काररूपं सीम-न्तोन्नयनाख्यं संस्कार कर्म करिष्ये । तत्पू-र्वाङ्गत्वेनादौ गणेशपूजनादि नान्दीश्राद्धान्तं कर्म्म करिष्ये ॥ इतिसङ्कल्प्य, पट्टोपरि स्थि-ताक्षतनिर्म्मितान् देवान् विधिना सम्पूज्य, नान्दीश्राद्धादिकञ्च कृत्वा, मण्डपे मृत्तिकया वेदीं विरच्य तत्र च पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य, कुशकण्डिकाञ्च कृत्वाऽऽचार्य्या-दिवरणं कुर्यात् । तत्र ब्रह्मवरणञ्चेत्थम्-
ॐ अद्य — कर्तव्यसीमन्तोन्नयनहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मकर्तुममुकोऽहम् ,

अमुकशर्म्माणं ब्राह्मणमेभिः पुष्पचन्दनताम्बूलवासोभिर्ब्रह्मत्वेन त्वामहं वृणे ॥ "ॐ वृतोऽस्मीति"–प्रतिवचनम् ॥ "यथाविहितं कर्म कुर्विति"–यजमानाभिहिते । "करवाणीति"–प्रतिवचनम् ॥

ततः कर्ताऽधोलिखितदेवाभिध्यानं कुर्य्यात्-

अद्येहसीमन्तहोमकर्म्मणा यक्ष्ये ॥ तत्र ॥ प्रजापतिम्, इन्द्रम् अग्निम्, सोमम्, प्रजापतिम्, ( तिलमिश्रितमुद्गस्थालीपाकेन ) अग्नि ँ स्विष्टकृतमाज्यस्थालीपाकाभ्याम्, अग्निम्, वायुम्, सूर्य्यम् अग्नीवरुणौ२, अग्निम्, वरुणम्, सवितारम्, विष्णुम्, विश्वान्देवान्, मरुतः, स्वर्कान्, वरुणम्, प्रजापतिञ्चाज्येन यक्ष्ये ॥ ततः ॥ "ॐ एतन्ते०" –इतिमन्त्रेण प्रतिष्ठाप्य "ॐ मङ्गलनामाग्नये नमः" भो मङ्गलनामग्ने ! सुप्रतिष्ठितो वरदो भव ॥ "ॐ चत्वारि शृंगेति"–मन्त्रेण ध्यायेत् ॥ ॐ मङ्गलना-

मारग्नये नमः ॥ पञ्चोपचारैः सम्पूज्य जुहुयात् ॥ ( ब्राह्मणान्वारब्धो ) तत्र तत्तदाहुत्यनन्तरं स्रुवावस्थितहुतशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः—ॐ प्रजापतये स्वाहा-इदं प्रजापतये नमम [मनसा]॥१॥ ॐ इन्द्राय स्वाहा-इदमिन्द्राय न मम ॥ [ इत्याघारौ ] ॥२॥ ॐ अग्नये स्वाहा इदमग्नये न मम ॥३॥ ॐ सोमाय स्वाहा इदं सोमाय न मम ॥ [इत्याज्यभागौ] ॥४॥

अथाज्येनाहुतयः—ॐ भूः स्वाहा, इदमग्नये न मम ॥१॥ ॐ भुवः स्वाहा, इदं वायवे न मम ॥२॥ ॐ स्वः स्वाहा, इदं सूर्य्याय न मम ॥३॥[एतामहाव्याहृतयः]॥ ॐ त्वन्नो ऽअग्ने०—प्रमुमुग्ध्यस्मत्स्वाहा-इदमग्नीवरुणाभ्यां न मम ॥४॥ ॐ स त्वन्नोऽअग्नेवमो०—सुहवो नऽ एधि स्वाहा-इदमग्नीवरुणाभ्यां न मम ॥५॥ ॐ अया-

श्चाग्ने:०-भेषज ७ स्वाहा-इदमग्नये अयसे न मम ॥६॥ ॐ ये ते शतं०-मरुतः स्वर्क्काः स्वाहा-इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो-देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम ॥७॥ ॐ उदुत्तमं०-अदितये स्याम स्वाहा-इदं वरुणाय आदित्याय अदितये च न मम ॥८॥ ॥इति सर्वप्रायश्चित्तम् ॥ ॐ प्रजापतये स्वाहा-इदं प्रजापतये न मम मनसा ॥९॥ (तत्रैवाज्यस्थाली पाकाभ्यां स्विष्टकृद्धोमः)। ॐ अग्नये स्विष्टकृते स्वाहा, इदमग्नये स्विष्टकृते न मम ॥१०॥

तदनन्तरमग्नेः पश्चाद् शुभासने गर्भिणीमुपवेशयेत् ।

ततस्त्रिश्वेत शल्लकीकण्टका ऽश्वत्थसाग्रशंकुपीतसूत्र ( तन्तु ) परिपूर्णतर्कु-दर्भपिञ्जलीत्रितयमौदुम्बरफलयुग्मान्वितप्रादेश-मितशाखाभिर्वस्तुलीकृत्य सीमन्तं (केशवेशं) मूर्ध्नि विनयति वरः ॥

पतिर्ललाटान्तमारभ्य [मस्तक के छोर से लेकर] पत्न्याः केशान् द्विधा [दो भागों में] कुर्यात्-

**ओ३म् भूर्विनयामि ॥१॥ ओ३म्भुवर्विनयामि ॥२॥ ओ३म्स्वर्विनयामि ॥३॥ ततः (पतिः) उदुम्बर (गूलर) फलयुग्मान्वित*शल्लकी-कण्टकादिपञ्चकं वधूसीमन्तदक्षिणतो वेणीं कृत्वा बध्नीयात् ॥ तत्र मन्त्रः ॥ ओ३म्अयमू-र्ज्जावत-इत्यस्य प्रजापतिर्ऋषिर्यजुश्छन्दः, फलिनीदेवता, वेणीबन्धने-विनियोगः ॥ ओ३म् अयमूर्ज्जावतो वृक्ष ऊर्ज्जीवफलिनी भव ॥**

॥ततः॥ पतिः वीणागाथिनौ प्रेषयति । सोमं राजानं गायताम्, इति प्रेरयेत् ॥ तत्र-मन्त्रः-

**ओ३म् सोममित्यस्य प्रजापतिर्ऋषिर्गायत्री छन्दः, सोमो देवता, गाने-विनियोगः ॥ ओ३म् सोम एव नो राजेमा मानुषीःप्रजाः । अवि-मुक्तचक्रऽआसीरँस्तीरे तुभ्यमसौ ॥ततः॥ "ओ३म् पूर्णा दर्व्वीति"—मन्त्रेण**

---

* सेह का काँटा ।

पूर्णाहुतिं दत्वा पविश्य, ॐ त्र्यायुष मितिभस्मधारयेत् ततः संस्रवप्राशनम् ।। आचम्य, ब्रह्मणे सदक्षिणापूर्णपात्रदानम् ।। तत्र प्रणीताविमोकः ।।

**"ॐ सुमित्रिया न ऽआप ओषधस्यसन्तु"**

इति प्रणीताजलेन पवित्राभ्यां शिरः सम्मृज्य, "ॐदुर्म्मित्रियाः०"--इत्यैशान्यां दिशि वा प्रणीतान्युब्जीकरणम् ।। ततः ।। "ॐ देवा गातु०"--इति बर्हि--होमः ।। दक्षिणासङ्कल्पः ।।

**कृतस्यास्य कर्म्मणः साद्‌गुण्यार्थमिमां दक्षिणां नानागोत्रेभ्यो ब्राह्मणेभ्यो विभज्य दातुमहमुत्सृजे, तथा ब्राह्मणाँश्च भोजयिष्ये ।।**

यजमानो यथा-संख्याकान् विप्रान् भोजयेत् । आचार्योऽभिषेकं कृत्वा तिलकाशीर्वादञ्च दद्यादिति ।।

## ❀ सीमन्त से सम्बंधित आवश्यक बातें ❀

सीमन्तोन्नयन-संस्कार 'सीमन्तश्चाष्टमे मासि' (व्यासस्मृतौ १।१७ अर्थात् यह संस्कार गर्भाधान से छठे वा आठवें महीने में करना चाहिये । "सीमन्तः बध्यते स्त्रीणां, केशमध्ये तु पद्धतिः" यह संस्कार स्त्री-रूपपरक है । इसमें केशों के मध्य की माँग का उन्नयन इधर उधर पाकर ऊपर लेजाना विहित है । 'सीमन्तस्योन्नयनम्, उद्‌भावनं वा सीम-

न्तोन्नयनम्'। 'सीमन्त'शब्द का तात्पर्य (सुश्रुत सं० शारी० ६।८१) में इस प्रकार से है कि-"पंचसन्धयः शिरसि विभक्ताः सीमन्ताः" अर्थात् शिर में पृथक् की हुईं पाँच सन्धियाँ सीमन्त होती हैं। तथा कोश में सीमन्त का केश-वेश वा गुंथा हुआ चूड़ा है, इनकी वृद्धि मस्तिष्क व बलको बढ़ाती है। इसीलिये इस संस्कार को सीमन्तोन्नयन'-कहते हैं। सीमन्त-शब्द से यह शिक्षा मिलती है कि-अब आगे स्त्री को शृङ्गार करना एवं पति-संगम करना निषेध है। अन्यथा गर्भके पतन का अथवा द्वितीयगर्भ ठहरने का भी विशेष भय होगा। साथ २ अपने कुविचारों से गर्भस्थशिशु के भी विचार मलीन होंगे, जिसका परिणाम नेष्ट होगा। माता-पिता के कुविचारों का प्रभाव गर्भस्थ शिशु पर छा जाता है। क्योंकि गर्भ में शिशु को छठे मास से ज्ञानोदय होने लगता है एवं मानसिक स्मरण शक्ति जाग्रत होने लगती है। इस संस्कार के होते ही स्त्रियों को अपने धार्मिक विचार रखने चाहिए ज्ञान शिक्षाएँ लेनी चाहिए, हरि चरित्र आदि सुनने चाहिए, जिससे इसका सुन्दर प्रभाव गर्भस्थ शिशु पर पड़े और वह सद्बुद्धि वाला बने। सीमन्त संस्कार करने से पुंसवन के फलकी प्राप्ति होती है।

### सीमन्तोन्नयन मुहूर्त-

जीवार्कारदिने मृगेज्यनिऋ्र्तिश्रोत्रादितिब्रध्नभैः,
रिक्तामार्करसाष्टवर्ज्यतिथिभिर्मासाधिपे पीवरे।

सीमन्तो ऽष्टमषष्ठमासि शुभदैः केन्द्रत्रिकोणे खलै-
र्लाभारित्रिषु वा ध्रुवान्त्यसदहे, लग्ने च पुंभांशके ॥

[मु० चि० सं० प्र० ५ श्लो० ८]

## ❀ अथ जातकर्म्म ❀

प्रसव पीड़ा से व्याकुल हुई गर्भिणी की देह पर निम्न लिखित मन्त्र से कुशोदक-द्वारा मार्जन करै। मन्त्र के विनियोग के लिये पति अपने दक्षिण-हाथ में जल लेकर मन्त्र पढ़ै-

**ॐ एजत्विति मन्त्रस्य प्रजापतिर्ऋषिः, महापङ्क्तिश्छन्दः, गर्भो देवता ऽभ्युक्षणे-विनियोगः ॥**

इस प्रकार विनियोग का जल पृथ्वी पर छोड़े। पुनः

**ॐ एजतु दशमास्यो गर्ब्भो जरायुणा सह। यथायं व्वायुरेजति यथा समुद्र एजति। एवायन्दशमास्यो ऽअस्रज्जरायुणा सह ॥**

फिर पति अग्रिम मन्त्र को वधू के समीप तीनवार बोलै-

**ॐ अवैतु पृश्निशेवल ꣳ शुने जराय्वत्तवे। नैन मा ꣳ सेन पीवरी न कस्मिंश्च नायतनमव जरायूपद्यताम् ॥**

फिर*पुत्रोत्पत्ति के अनन्तर पिता कुलदेवताओं तथा पूज्य गुरुजनों को प्रणाम करके, पुत्र के मुख को देखकर सचैल स्नान करै। पुनः नूतन वस्त्रों को धारण करके अपने आसन पर बैठ कर तीन आचमन एवं प्राणायाम करें। पुनः स्वस्तिवाचन, एवं निर्विघ्नतार्थं श्री गणपति पूजन, पुण्याह वाचन मातृका पूजन, षोडशमातृका पञ्चोंकार देवता पूजन, आयुष्यमन्त्र जप एवं नान्दी श्राद्ध आचार्य द्वारा विधिपूर्वक करे तथा उन्हें अन्नदान स्वर्णदान आदि दक्षिणा देवै। पुनः सङ्कल्प करै-

**ॐ अद्येत्यादि०—अमुकशर्माऽहं, वर्माऽहं, गुप्तोऽहं वा, मम जातस्य पुत्रस्य गर्भाऽम्बुपानजनित-समस्तदोषनिबर्हणाऽऽयुर्मेधाभिवृद्धिद्वाराबीजगर्भसमुद्भवैनोनिबर्हणद्वारा — -श्रीपरमेश्वरप्रीत्यर्थं जातकर्माख्यं संस्कारञ्च करिष्ये ॥**

ऐसा सङ्कल्प बोलकर मेधाजनन-क्रिया करै-

इति-संकल्प्य, मेधाजननं कुर्य्यात् ॥ यथा पिता नाभिव-

---

* पुत्रजाते व्यतीपाते, दत्तं भवति चाक्षयम्।
यावन्न छिद्यते नालं, तावन्नाप्नोति सूतकम् ॥
तत्र नालच्छेदनात्पूर्वं सम्पूर्ण सन्ध्यावन्दनादि कर्म्माणि नाशौचम्। ( धर्मसिन्धौ ) नान्दीश्राद्धञ्च तन्त्रेण हेम्नैव कुर्यात्।

र्धनात्प्राक् दक्षिणहस्तस्यानामिकया स्वर्णान्तर्हितया मधुघृतेऽसमानमात्रयैकीकृते घृतमेव वा बालकं प्राशयति ॥

तत्र त्रिव्याहृतीनां प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुब्बृहत्यश्छन्दांसि, अग्निवायुसूर्य्यप्रजापतयो देवताः, मध्वाज्य प्राशने विनियोगः ॥ ॐ भूस्त्वयि दधामि ॥ १ ॥ ॐ भुवस्त्वयि दधामि ॥२॥ ॐ स्वस्त्वयि दधामि ॥ ३ ॥ ॐ भूर्भुवः स्वः सर्वं त्वयि दधामि ॥ ॐ प्र ते ददामि मधुनो घृतस्य वेद सविता प्रसूतं मघोनाम् । आयुष्मान् गुप्तो देवताभिः शतञ्जीव शरदो लोकेऽस्मिन् ॥

पश्चात् पिता बालक के दक्षिण कान में धीरे-धीरे तीन बार निम्नलिखित मंत्रों को बोले । इससे पूर्व (हाथ में जल लेकर )-

ॐ अग्निरायुष्मानित्यादीनामष्टानां मन्त्राणां प्रजापतिर्ऋषिः, गायत्रीछन्दः, लिङ्गोक्ता देवताः दीर्घायुष्य-करणार्थे जपेविनियोगः ॥

इस प्रकार विनियोग का जल पृथ्वी पर छोड़ें। पुनः-

ॐ अग्निरायुष्मान् स वनस्पतिभिरायुष्माँस्तेन त्वायुषाऽऽयुष्मन्तङ्करोमि ॥ १ ॥ ॐ सोमऽ आयुष्मान्त्सऽओषधीभिरायुष्माँस्तेन त्वायुषाऽऽयुष्मन्तङ्करोमि ॥ २ ॥ ॐ ब्रह्म आयुष्मत्तद् ब्राह्मणैरायुष्मत्तेन त्वायुषाऽऽयुष्मन्तङ्करोमि ॥३॥ ॐ देवाऽ आयुष्मन्तस्तेऽमृतैरायुष्मन्तस्तेन त्वायुषाऽऽयुष्मन्तङ्करोमि ॥ ४ ॥ ॐ ऋषयऽ आयुष्मन्तस्ते व्रतैरायुष्मन्तस्तेन त्वायुषाऽऽयुष्मन्तङ्करोमि ॥५॥ ॐ पितर ऽआयुष्मन्तस्ते स्वधाभिरायुष्मन्तस्तेन त्वायुषाऽऽयुष्मन्तङ्करोमि ॥६॥ ॐ यज्ञऽआयुष्मान्त्स दक्षिणाभिरायुष्माँस्तेन त्वायुषाऽऽयुष्मन्तङ्करोमि ॥ ७ ॥ ॐ समुद्रऽ आयुष्मान्त्स स्रवन्तीभिरायुष्माँस्तेन त्वायुषाऽऽयुष्मन्तङ्करोमि ।८। इति त्रिवारमुक्त्वा-ॐ त्र्यायुषमित्यस्य नारायणऋषिः, उष्णिक् छन्दः,

शिवो देवता, त्र्यायुष्यकरणे–विनियोगः ॥ ॐ त्र्यायुषञ्जमदग्नेः कश्यपस्य त्र्यायुषम् । यद्देवेषु त्र्यायुषन्तन्नोऽअस्तु त्र्यायुषम् ॥

इस मन्त्र को तीन वार कहकर बालक की दीर्घायु चाहता हुआ पिता फिर बालक को स्पर्श करके वात्स अनुवाक बोलें । वह इस प्रकार-

ॐ दिवस्परीत्येकादशानां मन्त्राणां वत्सप्रीर्भालनन्दन ऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवता, जाताऽभिमर्शने-विनियोगः ॥ ॐ दिवस्परि प्रथमञ्जज्ञे ऽअग्निरस्मद् द्वितीयं परिजातवेदाः । तृतीयमप्सुनृमणा अजस्रमिन्धानऽएनं जरते स्वाधीः ॥ १ ॥ विद्माते ऽअग्ने त्रेधा त्रयाणि विद्मा ते धाम विभृता पुरुत्रा । विद्मा ते नाम परमं गुहा यद्विद्मा तमुत्सँय्यत ऽआजगन्थ ॥ २ ॥ ॐ समुद्रे त्वा नृमणा ऽअप्स्वन्तर्नृचक्षाऽईधे दिवो ऽअग्न ऽऊधन् । तृतीये त्वा रजसि तस्थिवा ७

समपामुपस्थे महिषाऽअवर्द्धन् ॥ ३ ॥ अक्रन्ददग्नि स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् ॥ सद्यो जज्ञानो व्विह्वीमिद्धोऽअख्यदा रोदसी भानुनाभात्यन्तः ॥ ४ ॥-श्रीणामुदारो धरुणो रयीणाम्मनीषाणां प्रार्प्पणः सोमगोपाः । व्वसुः सूनुः सहसोऽअप्सु राजा व्विभात्यग्र ऽउषसामिधानः ॥५॥ व्विश्श्वस्य केतुर्भुवनस्य गर्भ ऽआरोदसीऽअपृणाज्जायमानः । व्वीडुञ्चिदद्रिमभिनत्परायञ्जनायदग्निमयजन्त पञ्च ॥६॥ उशिक्पावकोऽअरतिः सुमेधा मर्त्त्येष्वग्निरमृतो निधायि । इयर्ति धूममरुषं भरिभ्रदुच्छुक्रेण शोचिषाद्यामिनक्षन् ॥७॥ दृशानो रुक्मऽ ऊर्व्व्या व्यद्यौद्-दुर्म्मर्षमायुः श्रिये रुचानः । अग्निरमृतो ऽअभवद्वयोभिर्य्यदेनं द्यौरजनयत् सुरेताः ॥ ८ ॥ यस्ते ऽअद्य कृणवद्भद्र शोचे पूपन्देव घृतवन्तमग्ने । प्रतन्नय प्रतरं व्वस्यो ऽअच्छाभिसु-

स्मन्देव भक्तँय्यविष्ठ। आ तम्भज सौश्रव-
सेष्वग्न ऽ उक्थ उक्थ आभज शस्यमाने।
प्रियः सूर्य्ये प्रियोऽअग्ना भवात्युज्जातेन-
भिनदद्दुज्जनित्वैः ॥१०॥ त्वामग्ने यज-
माना ऽअनुद्यून् विश्श्वा व्वसु दधिरे व्वा-
र्य्याणि। त्वया सह द्रविणमिच्छमानाव्रजं
गोमन्तमुशिजो व्विवव्रुः ॥ ११॥

ततः कुमारस्य प्रागादि-प्रतिदिशमेकैकं ब्राह्मणं मध्ये पञ्चममूर्ध्वमवेक्षमाणमवस्थाप्य तानुद्दिश्य, इममनुप्राणेति पिता ब्रूयात् ॥ ततः-

ॐ मही द्यौरित्यादिमन्त्रैः-

पञ्चकलशान् सम्पूज्य, तान्ब्राह्मणान् वृत्वा-

ॐ प्राणेतिपूर्वस्थितो ॐ व्यानेति–दक्षि-
णस्थितो ॐ अपानेति-पश्चिमस्थितः, ॐ
उदानेति-उत्तरस्थितः, ॐ समानेति-मध्य-
स्थितः, उपर्य्यवेक्ष्यमाणः ॥ एषामसम्भवे
पिता "इममनुप्राणित" इति।

प्रैष्यवाक्यमनुक्त्वा स्वयमेव तत्र तत्रोपविश्य तथैव

ब्रूयात् [ततस्तान् कलशान् पञ्चब्राह्मणेभ्यो दत्वा] अथ बालकस्य जन्म भूमिमभिमन्त्रयेत् ॥

ॐ व्वेद ते भूमिहृदयमित्यस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दः, भूमिर्देवता, जन्मभूम्यभिमन्त्रणेविनियोगः ॥ ॐ व्वेद ते भूमि हृदयन्दिवि चन्द्रमसि श्रितम् । व्वेदाहं तन्मां तद्विद्यात्पश्येम शरदः शतञ्जीवेम शरदः शत ७ शृणुयाम शरदः शतम् ॥ इति

ततः बालकमभिस्पृशति-

ॐ अश्मा भवेत्यस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दः, लिङ्गोक्ता–देवता, अभिस्पर्शनेविनियोगः ॥ ॐ अश्मा भव परशुर्भव हिरण्यमस्तृतम्भव । आत्मासि पुत्र मा मृथाः स जीव शरदः शतम् ॥ इति

अथ बालकमातरमभिमन्त्रयेत्

ॐ इडासीत्यस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दः, इडादेवता, अभिमन्त्रणे-विनियोगः ॥ ॐ इडाऽसि मैत्रावरुणी व्वीरे

व्वीरमजीजनथाः। सा त्वं व्वीरवती भव यास्मान् वीरवतोऽकरत् ॥ इति ॥

ततः बालकनाभिवर्द्धने कृते पत्न्याः * दक्षिणस्तनं ओष्णोदकेन प्रक्षाल्य बालकाय [पिता] ददाति-

ॐ इममित्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः, अग्निर्देवता, दक्षिणस्तनप्रदाने-विनियोगः ॥ ॐ इम ँ स्तनमूर्जस्वन्तं धयापां प्रपीनमग्ने सरिरस्य मध्ये। उत्स-ञ्जुषस्व मधुमन्तमर्वन्त्समुद्रिय ँ सदनमाविशस्व ॥ इति ॥

पुनः पिता वामस्तनं कवोष्णेन जलेन प्रक्षाल्य बालकाय प्रयच्छति ॥

ॐ यस्ते स्तन--इति दीर्घतमा-ऋषिस्त्रिष्टुप्छन्दः, वाग्देवता, वामस्तनप्रदाने-विनियोगः ॥ ॐ यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा व्वसुविद्यः सुदत्रः। येन विव-

---

* बालक के प्रथम माता का स्तनपान का मुहूर्त-
रिक्ताभौमं परित्यज्य, विष्टिपातं सवैधृतिम्।
मृदुध्रुवक्षिप्रभेषु, स्तन्यपानं हितं शिशोः ॥

श्रया पुष्यसि वार्य्याणि सरस्वति तमिह धातवेऽकः ॥ इति ॥

ततः प्रसूतिकायाः शिरोदेशे भूमौ जलपूर्णं कलशं स्थापयेत्-

ॐ आपइत्यस्य प्रजापतिर्ऋषिः, अनुष्टुप्छन्दः, आपो देवताः, सूतिकायाः शिरः प्रदेशे रक्षार्थोदककुम्भस्थापने-विनियोगः ॥ ॐ आपो देवेषु जाग्रथ यथा देवेषु जाग्रथ। एवमस्या ँ सूतिकाया ँ सपुत्रिकायाञ्जाग्रथ ॥

[इत्यनेन सूतिकोत्थापनपर्य्यन्तं तत्रैव धर्तव्यम् ] ॥ ततः सूतिकायाः गृहद्वारप्रदेशे-

ॐ भूर्भुवः स्वः प्रगल्भनामाग्निं स्थापयामीति'।

संस्थाप्य, तस्मिन्पञ्चभूसंस्कारान् कृत्वाऽग्ने रुपसमाधानम्, स चाग्निरुत्थानदिनपर्यन्तं तत्रैव सुरक्षितव्यः [अस्मिन्नेवावसरे नालच्छेदनमपि कार्य्यम् ]। तत्र चाग्नौ सायं प्रातः कालयोः फलीकरणांस्तण्डुलांस्तन्मिश्रान् सर्षपान् दशदिनानि पर्यन्तं पिता, कश्चिदन्यो वा ब्राह्मणः 'शण्डामर्का' इति मन्त्राभ्यामाहुतिद्वयं नित्यमेव हस्तेन जुहोति ॥

ॐ शण्डामर्का-इतिमन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दः, अग्निर्देवता, सूतिकाद्वाराग्नौ तण्डुलकणमिश्रितसर्षपहोमे—विनियोगः ।। ॐ शण्डामर्का ऽ उपवीरःशौण्डिकेय उलूखलः । मलिम्लुचो द्रोणासश्च्यवनो नश्यतादितः स्वाहा, इदमग्नये न मम ।।१।।

ॐ आलिखन्निति—प्रजापतिर्ऋषिरनुष्टुप्छन्दोऽग्निर्देवता, सूतिकाद्वाराग्नौ तण्डुलकणमिश्रसर्षपहोमे—विनियोगः ।। ॐ आलिखन्ननिमिषः किम्वदन्तऽ उपश्रुतिः हर्य्यक्षः कुम्भीशत्रुः पात्रपाणिर्नृमणिः । हन्त्रीमुखस्सर्षपारुणश्च्यवनो नश्यतादितः स्वाहा ।। इदमग्नये न मम ।। २ ।।

ततो यदि दशदिनाऽऽभ्यन्तरे क्रूरग्रहो बालग्रहो वा कुमारमाविशेद्, येनाविष्टो न नामयति,न रोदिति, न हृष्यति न च तुष्यति, तदैतन्नैमित्तिकं कर्म्म कर्तव्यम् ।। तम्बालकं जालेन प्रच्छाद्योत्तरीयेण वस्त्रेणांकमादाय तं बालं पिता जपति ।।

ॐ कूर्कुर-इतिप्रजापतिर्ऋषिरनुष्टुप्छन्दः

शुनकोदेवता, शान्त्यर्थे जपे विनियोगः ॥
ॐ कूर्क्कुरः सुकूर्क्कुरः कूर्क्कुरो बालबन्धनः। चेच्चेच्छुनक सृज नमस्तेऽअस्तु सीसरो लपेतापह्वर ॥१॥ ॐ तत्सत्यं यत्ते देवा व्वरमददुः स त्वं कुमारमेव वाऽवृणीथाः॥ चेच्चेच्छुनकसृज नमस्तेऽअस्तु सीसरो लपेतापह्वर॥१॥ ॐ तत् सत्यं यत्ते सरमा माता सीसरः पिता श्यामशबलौ भ्रातरौ। चेच्छुनक सृज नमस्तेऽअस्तु सीसरो लपेतापह्वर ॥ ३॥

इत्येव जपः ॥ ततो बालकदेहमभिस्पृशेत्–

न नामयतीत्यस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दो, वायुर्देवता ऽभिमर्शनेविनियोगः ॥
ॐ न नामयति न रुदति न हृष्यति न ग्लायति यत्र व्वयम्व्वदामो यत्र चाऽभिमृशामसि

इत्यभिमृश्य, ब्राह्मणेभ्यो दक्षिणां दत्वा मन्त्राऽभिषेकं गृह्णीयात्, ब्राह्मणभोजनञ्च कुर्य्यात्।

**❀ जातकर्म्म से संबन्धित आवश्यक बातें ❀**

जातकर्म्म–संस्कार–इस संस्कार के करने से उत्पन्न हुए

बालक में प्रशस्त-तेज उत्पन्न होता है, तथा ज्ञान की जागृति होती है। गर्भ के समस्त दोषों के दूर करने के लिये ही जन्म के अनन्तर जातकर्म्म-संस्कार किया जाता है। इस संस्कार में जो बालक को स्वर्ण-शलाका से मधु चटाया जाता है, उससे उसकी स्मृति-शक्ति तीव्र होती है, एवं आयु बल की वृद्धि होती है। मधु-पान कराने से बालक के वातादिक-त्रिदोष शमन होकर उसे नीरोगता मिलती है, यह आयुर्वेदिक-मत है। बालक ने जैसा भी मातृ-गर्भ में भक्षण किया, वैसी ही उसकी बुद्धि हो जाती है। उस भ्रष्ट-बुद्धि को निर्मल करने के लिये यह संस्कार करना, कराना परमावश्यक है।

प्रसूति के शीघ्र-प्रसव होने के लिये शास्त्रोक्त कुछ एक उपाय हैं, जो नीचे लिखे जाते हैं। यथा-एक कांसे की थाली में गङ्गाजल मे घिसकर गेरू से चक्र-व्यूह यन्त्र बनावे और उसे गङ्गाजल से ही धोकर प्रसूति को पिलावे, तो शीघ्र ही प्रसव-उत्पन्न होगा, एवं जनन-पीड़ा शान्त होगी ॥ १ ॥ "ॐ क्षिप-निक्षिप उन्मथ-प्रमथ मुञ्च-मुञ्च स्वाहा" इस च्यवन-मन्त्र द्वारा १० बार अभिमन्त्रित किया हुआ शीतल जल यदि प्रसूता पीदे, तो शीघ्र ही प्रसव-उत्पत्ति होगी ॥२॥ एक कांसे की कटोरी में १-२ तोले तिल का तैल और कुछ एक दूब के अंकुर डाले, पुनः उसे गर्भिणी के शिर पर प्रदक्षिण-क्रम से घुमाता हुआ नीचे लिखे हुए इस मन्त्र को

१०८ बार पढ़े [मन्त्र]–"ॐ हिमवत्युत्तरे पार्श्वे, शवरी नाम यक्षिणी । तस्याः नूपुरशब्देन, विशल्या गर्भिणी भवेत् । ॐ शवरीयक्षिण्यै नमः ॥"-पुनः कुछ तैल गर्भिणी को पिलावे तथा बचे हुए तेल को उसके पेट पर मल देवे तो शीघ्र प्रसव हो ॥३॥ अथवा-एक चौकोर भोजपत्र के टुकड़े पर रक्त चन्दन से नव-कोष्ठक का 'पञ्चदशी यन्त्र' यथा-विधि गर्भिणी के समक्ष बनावे । प्रथम १ अङ्क से ९ अंकों तक नव दुर्गाओं के नामों का क्रमशः उच्चारण करता हुआ यन्त्र बनाता जाय [यथा-प्रथमं शैलपुत्री च, द्वितीयं ब्रह्मचारिणी । तृतीयं चन्द्रघण्टेति, कूष्माण्डेति चतुर्थकम् । पञ्चमं स्कन्दमातेति, षष्ठं कात्यायनीति च । सप्तमं कालरात्रीति, महागौरीति चाऽष्टमम् । नवमं सिद्धिदात्री च, नवदुर्गाः प्रकीर्तिताः ॥ इति ॥ ] पुनः इस यन्त्र को धूप देकर गर्भिणी को

| वि [illegible] | ऐ १ | डा ६ |
|---|---|---|
| क्लीं ३ | मुं ५ | यै ७ |
| चा ४ | च्चे [illegible] | ह्रीं २ |

दिखावे और इस यन्त्रको उसके सिरहाने रखदे,तो सुखपूर्वक प्रसवकी उत्पत्ति होती है । उक्तञ्च-"गजाऽग्निवेदा उडुराट्शराङ्का, रसाश्विपक्षा इति हि क्रमेण । लिखेत्प्रसूतेः समये तु शीघ्रं, सुखेन नार्यः प्रसवन्ति बालम् ॥ इति ॥ पुनः बालक के हो जाने पर यन्त्र को गर्भिणी के सिरहाने से हटा देना चाहिये ॥४॥ इत्यादि उपायों द्वारा शीघ्र प्रसव हो जाता है ।

जनन-सूतक का निर्णय- जब तक बालक का नाल-

विच्छेदन नहीं होता, तब तक जनन-सूतक नहीं लगता। यथा जैमिनी० यावन्न छिद्यते नालं, तावन्नाप्नोति सूतकम्। छिन्ने नाले ततः पश्चात्सूतकन्तु विधीयते।'---इस प्रमाण-द्वारा नाल-छेदन (नरा कटने) से पूर्व ही बालक का जात-कर्म्म-आदि सविधि कर लेना चाहिये, यह प्रथा सर्वसम्मत है। मरीचि-आदि ऋषियों का कथन है कि--पुत्रोत्पत्ति होने पर स्वर्ण-दान द्वारा नान्दीमुख-श्राद्ध अवश्य करे। उस समय समयानुसार 'जातकर्म्म' कर लेना ही धर्म्मसम्मत है। अस्तु---

मेधाजनन-संस्कार----"धीर्धारणावती मेधा-इत्यमरः" अर्थात् कही हुई वार्ता को धारण रखने वाली बुद्धि का नाम मेधा है। यह संस्कार उत्पन्न हुए बालक को मेधा बुद्धि तथा आयु बढ़ाने के लिए नालच्छेदन-क्रिया से पूर्व ही किया जाता है। पिता अपने दक्षिण-हाथ की अनामिका-अंगुली के अगले-भाग से प्रथम-८ भाग शुद्ध-मधु, तथा एक भाग-शुद्ध घृत एक चाँदी की कटोरी में मिश्रित करे पुनः अनामिका तथा अंगुष्ठ से एक स्वर्ण-शलाका पकड़ कर उस मिश्रित किये मधु-घृत को बालक की जिह्वा [जीभ] पर उपरोक्त --'ॐ भूस्त्वयि दधामि'-आदि चार-मन्त्रों को बोलता हुआ लगावे, इसके चटाने से बालक की बुद्धि पवित्र होती है और बल-आयु की वृद्धि होती है। कई विद्वान् गर्भोत्पन्न बालक की जीभ पर मधु से 'ॐ' मन्त्र कोई 'सर-

स्वती-यन्त्र' तथा कुछएक 'गणेश यन्त्र'-आदि लिखते हैं, ये सब बालक की विशिष्ट-बुद्धि करने के लिये ही किया जाता है।

नालच्छेदन-क्रिया–चतुर वृद्धा दाई बालक की नाभि से ८ अंगुल की दूरी पर तथा उससे आगे ८ अंगुल दूरी पर दोनों ओर सूत के दृढ़ डोरेसे दोदृढ़ बन्धन करे। उसके मध्य में तीक्ष्ण धार वाले चाकू से नालच्छेदन करे। यदि कदाचित नाभि पक जावे तो वैद्या की अनुमति से हल्दी, दारुहल्दी, प्रियंगु, मुलहठी, पठानी-लोध कूट कर तिल तैल में पकाकर उस तेल को बालक की नाभि पर लगावे। यदि बालक को दुष्ट-दृष्टि (भूत-प्रेतादिक) आदि दोषों के कारण किसी प्रकार का भय वा कष्ट दिखाई दे, तो-"ॐ रक्ष रक्ष महादेव ! नीलग्रीव ! जटाधर ! ग्रहैस्तु सहितो रक्ष, मुञ्च-मुञ्च कुमारकम्"–इस मन्त्र को भोज पत्र पर लिखकर लाल कपड़े में बालक की दाहिनी-भुजा में बांध देवे, तो अवश्य कष्ट-निवारण होता है ॥१॥ अन्य उपाय–

"ॐ वासुदेवो जगन्नाथः पूतनातर्जनो हरिः। रक्षति त्वरित बालं, मुञ्च मुञ्च कुमारकम् ॥ बालग्रहान् विशेषण छिन्धि-छिन्धि महाभयात्। त्राहि त्राहि हरे ? नित्यं,रक्षत्वं गोविन्द विभुम् ॥"-इस मन्त्र से भस्म को अभिमन्त्रित करके बालक के मस्तक,कण्ठ एवं हृदयादि पर लगावे, तो समस्त भय दूर होते हैं ॥ इति जातकर्म्म ॥

## ❀ अथ षष्ठीमहोत्सव-विधिः ❀

छठी ( षष्ठी ) पूजन-षष्ठीका अर्थ है कि-२ हाथ, २पैर, १ धड़, १शिर-इन छः अङ्गों को रचने वाली बाल-शरीरस्थ शक्ति को 'षष्ठी-देवी' कहते हैं। इसके प्राण और अन्तःकरण ही 'संकर्षण' और 'प्रद्युम्न' नामक दो पुत्र हैं। जिसे ये तीनों शरीर को नीरोग करें, उसे षष्ठी-पूजन कहते हैं। इसके पूजन में आठ–दीपक रखे जाते हैं। यह षष्ठी–महोत्सव प्रायः नियत–दिन अर्थात् जन्म से छठे–दिन ही होता है। अन्य कृत्य तो प्रायश्चित करके पीछे भी हो सकते हैं। प्रसूता स्त्री शुभ-मुहूर्त देखकर शिर सहित स्नान करे।

स्नाता प्रसूताऽप्यसुता बुधेन, स्नाता च बन्ध्या भृगुनन्दनेन।
सौरे मृतिः दुग्धहतिश्च सोमे, पुत्रार्थलाभो रविभौमजीवे॥

पुनः कुलरीति–अनुसार षष्ठी–देवी का यथा–विधि पूजन करे।

तत्र-जन्मदिनतः षष्ठदिने पुत्रकलत्रयुती यजमानो मङ्गल-द्रव्ययुक्तसलिलेन स्नात्वा, नूतनवाससी भूषणानि च धृत्वा, कृतमंगलतिलको मातृपितृगुर्वाचार्यकुलदेवताब्राह्मणान् प्रणम्य, गृहान्तः शुभासने पूर्वाभिमुख उपविश्य, स्वदक्षिणतोऽपत्ययुतां पत्नीं चोपविश्य, तत्र च पूजासामग्रीं सम्पाद्य, धृतपवित्रपाणिराचान्तः प्राणायामञ्च विधाय॥

बालकका पिता-आदि बालकके जन्मसे छटे-दिन [शुभ-दिनमें] स्नान करके शुद्ध-वस्त्र पहिने। पुनः पूजा-सामग्री इकट्ठी

करके पूर्व-मुख होकर आसन पर बैठे-

**ॐ भद्रङ्कर्णेभिः शृणुयाम देवा भद्रम्पश्येमाक्षभिर्य्यजत्राः । स्थिरैरङ्गैस्तुष्टुवा ँ सस्तनूभिर्व्यशेमहि देव हितं यदायुः ॥**

पुनः नीचे-लिखे मन्त्रों से शरीर पर जल छिड़कें-

**ॐ अपवित्रः पवित्रो वा० (पृष्ठ ८), ॐ आपो हिष्ठामयो० (पृष्ठ १४)**

इन दोनों-मन्त्रों द्वारा मार्जन करके देह-शुद्धि करें। पुनः नीचे लिखे मन्त्र से शिखा-बन्धन करें-

**ॐ मा नस्तोके तनये मा नऽआयुषि मानो गोषु मानोऽ अश्श्वेषु रीरिषः। मानो व्वीरान्नुद्र भामिनो व्वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥**

पुनः नीचे-लिखे मन्त्र-द्वारा गङ्गाजल के तीन आचमन करें-

**ॐ इमम्मे गङ्गे यमुने सरस्वती शुतुद्रि स्तोमे सचेतापरुष्ण्यामरुद् वृधे व्वितस्तया-र्जीकीये शृणु ह्यासुषो मया ॥ ॐ केशवाय नमः ॥ १ ॥ ॐ माधवाय नमः ॥ २ ॥ ॐ**

**नारायणाय नमः ॥ ३ ॥ (हाथ धोवें)–ॐ गोविन्दाय नमोनमः ॥ ४ ॥**

पुनः नवीन-यज्ञोपवीत धारण करें-

**ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्य-त्सहजं पुरस्तात्।आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं, यज्ञोपवीतं बलमस्तु तेजः ॥ यज्ञोपवी-तमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि ॥**

पुनः प्राणायाम [पृष्ठ १३] करें। तदनन्तर पञ्चगव्य [पृष्ठ ५] बनाकर प्राशन करें तथा गृह-शुद्धि के लिये उसका प्रोक्षण करें। पुनः आचार्य स्वस्तिवाचन [पृष्ठ १], तथा शान्ति पाठ [पृष्ठ १८] पढ़ें। पुनः यजमान गणपत्यादि-देवताओं की पूजा [पृष्ठ २२] करके, प्रतिज्ञासंकल्प करें-

**ॐ विष्णुर्विष्णुर्विष्णुः० अद्येत्यादि० अमुकगोत्रोत्पन्नोऽमुकनामशर्म्माऽहं, वर्म्मा-ऽहं, गुप्तोऽहं वा, मम गृहे जातस्यार्भकस्या-ऽखिलोपद्रवनिवारणार्थं तथा बालकस्याऽऽ-युरारोग्याभिवृद्ध्यर्थं सर्वाबाधानिवृत्तिहे-तवे, प्रद्युम्नस्कन्दयोः पूजनपूर्वकं षट्कृत्ति-कापूजनं, विघ्नेशजन्मदायाः जीवन्त्यपर-**

**नाम्न्याः षष्ठीदेव्याश्च यथालब्धोपचारैः पूजनञ्च करिष्ये ॥**

इस प्रकार संकल्प करके स्कन्द तथा प्रद्युम्न की दो मूर्तियां दीवाल के ऊपर गोबर की बनावै, अथवा दोनों की एक ही मूर्ति बना लेवै. फिर नीचे-लिखे बीज-मन्त्रों से उनकी प्राणप्रतिष्ठा करै-तद्यथा-

**ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हों ॐ क्षं सं हं सः ह्रीं ॐ आं ह्रीं क्रों-अस्यां गोमयप्रतिमायां स्कन्दस्य प्राणा इहागत्य सुखञ्चिरं तिष्ठन्तु, जीवश्चेह तिष्ठतु, सर्वेन्द्रियाणीह तिष्ठन्तु॥१॥ ॥तत्र स्कन्दमन्त्रः॥ ॐ यदक्रन्दः प्रथमञ्जायमानऽउद्यन्त्समुद्राद्वुतवा पुरीषात्। श्येनस्य पक्षा हरिणस्य बाहूऽउपस्तुत्यम्महि जातन्तेऽअर्व्वन् ॥ ॐ स्कन्दाय नमः ॥ पुनश्च–**

**ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हों ॐ क्षं सं हं सः ह्रीं ॐ आं ह्रीं क्रों-अस्यां गोमयप्रतिमायां प्रद्युम्नस्य प्राणा इहागत्य**

सुखञ्चिरं तिष्ठन्तु, जीवश्चेह तिष्ठतु, सर्वेन्द्रियाणीह तिष्ठन्तु ॥ २ ॥ ॐ प्रद्युम्नायनमः । ॐ मनो जूतिर्ज्जुषतामाज्ज्यस्थ बृहस्पतिर्य्यज्ञ मिमन्तनो त्वरिष्ट य्यज्ञ ँ समिमन्दधातु । व्विश्श्वे देवा सऽइह मादयन्तामोँ ३ म्प्रतिष्ठ्ठ ॥

इति मन्त्रेण ॥ प्रतिष्ठाप्य-

अनयो र्गोमयमूर्त्योः स्कन्दप्रद्युम्नौ सुप्रतिष्ठितौ वरदौ भवेताम् ।

॥ इति वदेत् ॥ ततः स्कन्दं ध्यायेत्-

ॐ कार्त्तिकेय ! महाबाहो ! गौरीहृदयनन्दन । कुमारं रक्ष मे भीतेः, कार्त्तिकेय नमोऽस्तु ते ॥ वराभयकरः साक्षाद्, द्विभुजः शिखिवाहनः । किरीटी कुण्डली देवो, दिव्याऽऽभरण भूषितः ॥ ॐ स्कन्दाय नमः, आवाहयामि, स्थापयामि, पूजयामि ॥१॥

ततः प्रद्युम्नं ध्यायेत्-

ॐ भो प्रद्युम्न महाबाहो, रुक्मिणी प्रिय-

**नन्दन। कुमारं रक्ष मे भीतेः, प्रद्युम्नाय नमो नमः ।। ॐ प्रद्युम्नाय नमः, आवाहयामि, स्थापयामि, पूजयामि ।। २ ।।**

फिर स्कन्द तथा प्रद्युम्न दोनों का षोडशोपचार-पूजन करे और आरती, मन्त्र-पुष्पाञ्जलि एवं नमस्कार करे ।। अथ षट्कृत्तिका पूजनम् ।

**ॐ शिवायै नमः ।१। ॐ सम्भूत्यै नमः ।२। ॐ अनसूयायै नमः ।३। ॐ क्षमायै नमः ।४। ॐ सन्नत्यै नमः ।५। ॐ सुप्रीत्यै नमः ।६।**

इति षोडशोपचारैः सम्पूज्य प्रार्थयेत्-

**ॐ जगन्मातर्जगद्धात्रि, जगदानन्दकारिणि। नमस्ते देवि कल्याणि, प्रसीद मम कृत्तिके।**

अथ षष्ठीदेवी-पूजनम् ।। अन्यत्र भित्तौ प्रलिखितगोमयमूर्तौ पूर्ववत् प्राणप्रतिष्ठां कृत्वाऽऽवाहनम् ।।

**ॐ आयाहि वरदे देवि ! षष्ठीदेवीति विश्रुता। शक्तिभिः सह पुत्रं मे, रक्ष-रक्ष वरानने ।।**

ततो मनो जूतिरितिमन्त्रेण प्रतिष्ठाप्य ॥ अथ ध्यानम् ॥

देवीमुञ्जनसंकाशां, चन्द्रार्द्धकृतशेखराम् । सिंहारूढां जगद्धात्रीं, कौमारीं भक्तवत्सलाम् ॥ खड्गं खेटञ्च बिभ्राणामभयां वरदां तथा । तारकाहारभूषाढ्यां, चिन्तयामि नवांशुकाम् ॥ "ॐ श्रीश्चते ल०" ॥ पुनरावाहनम्-ॐ आगच्छ वरदे देवि, स्थाने चाऽत्र स्थिरा भव । आराधयामि भक्त्या त्वां, रक्ष बालञ्च सूतिकाम् ॥ ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म ऽआवह ॥ ॐ भूर्भुवः स्वः, ॐ षष्ठी देव्यै नमः आवाहयामि ॥ अथाऽऽसनम् ॥ सन्ध्यारागनिभं रक्तमासनं स्वर्णनिर्मितम् । गृहाण सुमुखी भूत्वा, रक्ष बालञ्च सूतिकाम् ॥ ॐ ताम्मऽआवह जातवेदो लक्ष्मीमनपगामिनीम् । यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥ ॐ भूर्भुवः स्वः, ॐ षष्ठी देव्यै नमः ॥

इत्यासनं समर्पयामि नमः ॥ अथ पाद्य-

गङ्गाजलं समानीतं, सुवर्णकलशे स्थितम् ।
पाद्यं गृहाण मे बालं, सूतिकाञ्चैव पालय ॥
ॐ अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम् । श्रियं देवीमुपह्वये श्रीर्मा देवीर्जुषताम् ॥ ॐभूर्भुवः स्वः, ॐ षष्ठी देव्यै नमः

इति-पादयोः पाद्यं समर्पयामि नमः ॥ अथाऽर्घ्यम्-

अक्षतपुष्पगन्धाढ्यमर्घ्यार्थं निर्मलं पयः ॥
गृहाण पाहि मे पुत्रं, सूतिकां भयहारिणि!॥
ॐ कांसोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तान्तर्पयन्तीम् ॥ पद्मे स्थितां पद्मवर्णां, तामिहोपह्वये श्रियम् ॥

इति हस्तयोरर्घ्यं समर्पयामि नमः ॥ अथाऽऽचमनीयम्-

गृहाणाचमनीयन्तु, कर्पूरैलादिवासितम् ।
सबालं सूतिकां पाहि, जगन्मातर्नमोऽस्तु-ते ॥ ॐ चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् । तां पद्मनीमीं शरणमहं प्रपद्ये ऽअलक्ष्मीर्म्मे नश्यतां त्वां वृणोमि ॥

इत्याचमनीयं समर्पयामि ।। अथ पंचामृतम्-

**पञ्चामृतं गृहाणेदं, पयोदधिघृतंमधु-**
**शर्करासहितं देवि ! पाहि बालं समातृकम् ।।**
**ॐ घृतेन सीता मधुना समज्ज्यतां विश्वै-**
**र्देवैरनुमता मरुद्भिः । ऊर्ज्जस्वती पयसा**
**पिन्वमानास्मान् सीते पयसाभ्याववृत्स्व ।।**
**ॐ आदित्यवर्णे तपसोऽधिजातो वनस्पति-**
**स्तव वृक्षोऽथ बिल्वः । तस्य फलानि तपसा**
**नुदन्तु मायान्तरायाश्च बाह्या अलक्ष्मीः ।।**

इति पंचामृतस्नानान्ते शुद्धोदकस्नानमाचमनीयङ्गन्धोदक स्नानमुद्वर्तनस्नानं समर्पयामि । सर्वोपचारार्थेगन्धाक्षतपुष्पाणि समर्पयामि ।। अथ वस्त्रोवस्त्रे-

**दुकूलादियुतं देवि, नानारत्नैर्विभूषितम् ।**
**परिधत्स्वाऽमलं वस्त्रं, रक्ष मेऽपत्यसूतिके ।।**
**ॐ उपैतु मां देवसखः कीर्तिश्च मणिना**
**सह । प्रादुर्भूतोऽस्मि राष्ट्रे ऽस्मिन् कीर्ति-**
**मृद्धिं ददातु मे ।।**

इति वस्त्रोपवस्त्रे समर्पयामि ।। अथोपवीतम्-

**स्वर्ण-सूत्रमयं दिव्यं ब्रह्मणा निर्मितं पुरा ।**

उपवीतं मया दत्तं गृहाण जगदम्बिके ॥
ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ यज्ञोपवीतमसि यज्ञस्यत्वा० ॥

इति यज्ञोपवीतं समर्पयामि ॥ अथालङ्कारा:-

हार कङ्कण केयूर मेखला कुण्डलानि च ।
गृहाण कालिरात्रि त्वं, रक्ष मे सुतसूतिके ॥
ॐ क्षुत्पिपासामलाञ्ज्येष्ठामलक्ष्मीं नाशयाम्यहम् । अभूतिमसमृद्धिञ्च सर्वां निर्णुद मे गृहात् ॥

इत्याभरणानि समर्पयामि । अथ चन्दनम्-

कर्पूरागुरुकस्तूरी-कङ्कोलादिसमन्वितम् ।
चन्दनं स्वीकुरु त्वं मे, रक्षबालञ्च सूतिकाम् ॥
ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टाङ्करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥

इति चन्दनं समर्पयामि न्नमः ।, अथ पुष्पाणि-

सुमाल्यानि सुगन्धीनि मालत्यादीनि चाम्बिके ! गृहाण वरदे देवि, रक्ष बालञ्च सूतिकाम् ।। ॐ मनसः काममाकूतिं वाचः सत्यमशीमहि । पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ।।

इत्यक्षतान् पुष्पाणि च समर्पयामि नमः ।। अथ धूपम्-

वनस्पत्युद्भवं धूपं, दिव्यं स्वीकुरु देवि मे । प्रसीद सुमुखी भूत्वा, रक्ष मे सुतसूति, के ।। ॐ कर्द्दमेन प्रजा भूता मयि सम्भ्रम कर्दम । श्रियं वासय मे कुले मातरं पद्ममालिनीम् ।।

इति धूपमाघ्रापयामि ।। अथदीपम्-

आज्यवर्तिकृतं देवि, ज्योतिषां ज्योतिषन्तथा । जीवन्तिके गृहाणेमं, रक्ष मे सुतसूतिके ।। ॐ आपः सृजन्तु स्निग्धानि चिक्लीत बस मे गृहे ।। नि च देवीं मातरं श्रियं वासय मे कुले ।।

इति प्रत्यक्षदीपं दर्शयामि नमः ।। अथ नैवेद्यम्-

नैवेद्यं लेह्यपेयादिषड्रसैश्च समन्वितम् । भुङ्क्ष्व देवि ! गुणैर्युक्ता, रक्ष मे सुतसूतिके ॥ ॐ आर्द्रां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो मऽआवह ॥

इति नैवेद्यं निवेदयामि नमः ॥ आचमनीयं समर्पयामि नमः ॥ अथ फलानि-

ॐ आर्द्रां यस्करिणीं यष्टिं,सुवर्णां हेममालिनीम् । सूर्य्यां हिरण्यमयीं लक्ष्मीं जातवेदो म ऽआवह ॥

इति ऋतु फलानि समर्पयामि नमः ॥ अथ ताम्बूलम्-

नागवल्लीदलं रम्यं, पूगीफलसमन्वितम् । भद्रे गृहाण ताम्बूलं, पाहि मे सुतसूतिके ॥ ॐ ताम्मऽआवह जातवेदो लक्ष्मीमनपगामिनीम् । यस्यां हिरण्यं प्रभूतिं गावो दास्योऽश्वान्विन्देयं पुरुषानहम् ॥

इति ताम्बूलं समर्पयामि । पूगीफलं समर्पयामि । अथ दक्षिणा-

ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य

जातः पतिरेक ऽआसीत् । स दाधार पृथिवी-न्द्यामुते माङ्कस्मै देवाय हविषा विधेम ।

इति स्वर्ण दक्षिणां समर्पयामि ।। अथ कर्पूरनीराजनम्-

कदलीगर्भसम्भूतं, कर्पूरञ्च प्रदीपितम् ।
आरार्तिकमहं कुर्वे, रक्ष बालञ्च सूतिकाम् ।।

अथ पुष्पांजलिः-

नानासुगन्धपुष्पाणि, यथाकालोद्भवानि च ।
पुष्पाञ्जलिं गृहाणेमं, रक्ष बालञ्च सूतिकाम्

अथ प्रदक्षिणा-

ॐ ये तीर्त्थानि प्प्रचरन्ति सृकाहस्ता निषङ्गिणः । तेषा ँ सहस्रयोजनेव धन्वानि तन्मसि ।। ॐ यानि—कानि च पापानि, जन्मान्तर—कृतानि च । तानि—तानि प्रणश्यन्तु, प्रदक्षिण पदे-पदे ।। ॐ भूर्भुवः स्वः० प्रदक्षिणाञ्च समर्पयामि नमः ।।

अथ प्रार्थना-

ॐ षष्ठीदेवि ! नमस्तुभ्यं, सूतिकागृह-शालिनि । पूजिता परया भक्त्या, दीर्घ-

**मायुः प्रयच्छ मे ॥ १ ॥ जननीं जन्म-सौख्यानां, वर्धिनीं धनसम्पदाम् । साधिनीं सर्वभूतानां, जन्मदे त्वां नता वयम् ॥ २ ॥ गौरीपुत्रो यथा स्कन्दः, शिशुत्वे रक्षितः पुरा । तथा ममाप्ययमु बालं, रक्ष षष्ठि ! नमोऽस्तुते ॥ ३ ॥**

अनेन पूजनेन विघ्नेशजन्मदा जीवन्त्यपरनाम्नी भगवती-षष्ठीदेवी प्रीयताम् ॥ ततः सूतिकागृहे देव्यै माषभक्तबलिं दद्यात्

**ॐ क्षेत्रसंरक्षिके देवि, सर्वविघ्नविनाशिनि । बलिं गृहाण मे रक्ष, क्षेत्रं सूतीञ्च बालकम् ॥ इमं माषभक्तबलिं क्षेत्रसंरक्षिकायै महादेव्यै समर्पयामि नमः ॥**

ततो दिग्पालदेवतापूजनं कुर्यात्तथा तेभ्यो माषभक्तबलिं दद्यात् ॥ आरात्तिकञ्च कृत्वा द्वारदेशे चागत्य द्वारस्योभयतः कज्जलेन द्वे-द्वे मातृप्रतिमे लिखेत् ॥ तन्नामानि-

**धिषणा वृद्धिमाता च, महागौरी च पूतना । आयुर्दात्र्यो भवन्त्वेता, सदा बालस्य मे शिवाः**

ततः पञ्चोपचारैः सम्पूज्य

"ॐ धिषणादिचतसृमातृभ्यो नमः"

तस्यांच रात्रौ बद्धग्रीवस्यछागस्य कर्णताडनात् पुनःपुनः महाशब्दं कारयेत् येन भूतप्रेताद्या विनश्येयुः ।। पुनश्च पूजितः धनुषा राहुवेधमपि कारयेत् ।। ततो ब्राह्मणेभ्यो दक्षिणादिकं दत्वाऽऽशिषो गृह्णीयात् ।। दशमदिने च षष्ठीदेवतादीन् विसर्जयेत् ।। पंचमषष्ठदिवसनोः सशस्त्रपुरुषाः, नृत्यपराः स्त्रियश्च रात्रौ जागरणं कुर्युः, तत्र वेदपाठिनो ब्राह्मणाश्च-शान्तिपाठं (पृष्ठ १८) सस्वरैः पठेयुः ।। अथ भूयिसीदक्षिणा-संकल्पः-

**ॐ अद्येत्यादि० देशकालौ संकीर्त्य, अमुकोऽहं, मम जातस्यात्मजस्य दीर्घायुरारोग्याभ्युदयप्राप्तयेऽस्मिन् षष्ठीमहोत्सवकर्मणि कृतायाः स्कन्दप्रद्युम्नषट्कृत्तिकानां षष्ठीदेव्याश्च पूजायाः साद्गुण्यार्थे, न्यूनातिरिक्तसर्वदोषपरिहारार्थमिमां दक्षिणां नानागोत्रेभ्यो ब्राह्मणेभ्यस्तथा-याचकाऽनाथनटनर्तकगायकेभ्यश्च विभज्य दास्ये ।।**

ॐ शान्तिः शान्तिः सुशान्तिर्भवतु ।।

## ❀ अथ षष्ठी-महोत्सव-कथा ❀

**ॐ नारायणं नमस्कृत्य, नरञ्चैव नरोत्तमम् ।**

देवीं सरस्वतीं व्यासं, ततो जयमुदीरयेत् ॥ १ ॥
श्री युधिष्ठिर—उवाच ॥ पुत्रजन्मनि कन्यायां,
उत्सवः को विधीयते । किं दानं कस्य पूजा
च, तन्मे ब्रूहि जनार्दन ! ॥२॥ श्रीकृष्ण-उवाच-
शृणु पाण्डव ! यत्नेन, सुतोत्पत्तिमहोत्सवम् । जन्म-
षष्ठदिने कार्य्या, षष्ठीनाम्नीं त्रिशूलिनीम् ॥३॥
पीठेऽपराह्णसमये, गोमयीं प्रतिमां लिखेत् । कप-
र्दिकाः प्रदातव्याश्चांगे चांगे विशेषतः ॥४॥ कर्णयोः
कुण्डले देये, दूर्वापल्लवशोभिते । दिव्यवस्त्रपरी-
धानां, तां देवीं पूजयेत्ततः ॥५॥ अग्रे दीपाष्टकं
देयं, नैवेद्यैर्विविधैः शुभैः नारिकेलादिकं तद्वद्, देश-
कालोद्भवैः फलैः ॥ ६ ॥ कलशं स्थापयेत्तत्र,
अग्रतः पल्लवान्वितम् । द्विजन्मानं सपत्नीकं, सरा-
चारसमन्वितम् ॥७॥ आहूय कारयेत्तस्यास्तयो-
र्हस्तेन पूजनम् । शुल्कतण्डुलवेद्यां तु, तस्योपरि
समास्थिताम् ॥८॥ नृत्यगीतविनोदेन, वाद्येन च
युधिष्ठिर ! ॥ रात्रौ जागरणं कार्य्यं, दैवज्ञेन द्विजैः
सह ॥९॥ वटकाष्टकमालाभिर्बद्धग्रीवमजासुतम् ।
पुनः पुनर्महाशब्दं, कारयेत्कर्णताडनात् ॥ १० ॥
डाकिन्यो धातुधानाश्च, भूतप्रेतपिशाचकाः । बाल-

ग्रहाश्च नश्यन्ति, तच्छब्दाकर्णनाद् ध्रुवम् ॥११॥
तत्र दानानि देयानि ब्राह्मणेभ्यो विशेषतः । प्रथमे-ऽहनि षष्ठे वा, दाता नाप्नोति सूतकम् ॥ १२ ॥
दानं प्रतिग्रहं तत्र, श्राद्धञ्च क्रियते यतः । प्रभाते दीयते दानं, नटनर्तकगायकान् ॥ १३ ॥ स्त्रियः सभर्तृकाः पूज्या, वस्त्रालंकरणादिभिः । अनेन विधिना यस्तु, षष्ठीं देवीं प्रपूजयेत् ॥ १४ ॥ आ-युर्बृद्धिः भवेत्तस्य, सन्ततेरपि पाण्डव ! । पुत्रे जाते व्यतीपाते, ग्रहणे सूर्यचन्द्रयोः । पितुः सम्वत्सरदिने-दानं कोटिगुणं भवेत् ॥ इति षष्ठीकथा ॥

## ❀ अथ नामकर्मारम्भः ❀

तत्र जन्मदिनाद् दशमेऽहनि सूतिकां चोत्थाप्यै कादशेऽहनि [विहितदिनान्तरे वा] पिता नाम कुर्यात् । पञ्चगव्यप्रोक्षणपुरस्सरं सूतिकायै पञ्चगव्यं दत्वा कुमारं संस्नाप्याऽहते वाससी परिधाय, धृतमङ्गलतिलकः,

---

यह नाम-करण संस्कार यदि विहित-समय पर न हो सके तो आशौच के अनन्तर, अथवा छठे-मास में अथवा वर्ष-दिन पर भी कर सकते हैं । 'पिता नामकरण करे'–इस वाक्य से अन्य—संस्कारों में भी पिता के कर्त्ता होने का नियम शास्त्रों में आता है । माता—पिता तथा बच्चे को स्नान करके नवीन—वस्त्र धारण करने चाहिये । बच्चे को गोद में लेकर माता पूर्वाभिमुख होकर आसन पर बैठे, और पिता हवन—वेदी पर अग्नि—स्थापन करे ।

शुभासने चोपविश्याचम्य, प्राणानायम्य, कृतस्वस्त्ययनः, प्राङ् मुखः सामग्रीं सम्पाद्य, गणेशादिप चांगदेवताः सम्पूज्य, संकल्पं कुर्यात्

**ॐ अद्येत्यादि० अमुकशर्माऽहं ममास्य (यथा-काले) जातस्य पुत्रस्य वा कन्याया बीजगर्भसमुद्भवैनोऽपमार्जनायुरभिवृद्धि— द्वारा श्रीपरमेश्वर प्रीत्यर्थंनामकरणसंस्कारं करिष्ये ॥ इति सङ्कल्प्य ॥ पुण्याहवाचनान्ते प्रजापतिः प्रीयतामिति-वदेत् ॥**

ततोऽग्नेः पश्चिमतो बालकमादाय 'कुशकण्डिका' कुर्यात् ॥ तत्रक्रमः-

## ❀ अथ कुश-कण्डिका विधिः ❀

भाषार्थ-एक हाथकी चौकोर हवन-वेदीमें पहिले पञ्च भू-संस्कार करे । यथा-तीन कुशाओं द्वारा हवन-वेदी को दो बार झाड़कर उन कुशाओं का ईशानकोण में परित्यागन करे । पुनः गोमय-जल से वेदी का लेपन करे और स्रुवा के मूल-भाग से उस वेदी में प्रागग्र उत्तरोत्तर प्रादेश-मात्र तीन-रेखाएं खींचे । उल्लेखन-क्रम द्वारा अनामिका-अंगुष्ठ से उन रेखाओं के मध्य से कुछ मृत्तिका उठा कर ईशान,कोण में फेंक दे । फिर वेदी पर कुछ जल के छींटे

देवे। एक काँसे अथवा मिट्टी के पात्र में अग्नि को ढक कर लावे और उसे पश्चिमाभिमुख प्रथम अग्नि-कोण में रखे। पुनः यथा विधिः मन्त्रों द्वारा अग्नि को वेदी पर स्थापित करे। यजमान पहिले संकल्प-पूर्वक उत्तर-दिशा में ही ब्रह्मा का गन्धाक्षत पुष्प ताम्बूल, एवं वस्त्रादि द्वारा वरण करे। पुनः ब्रह्मा अपना यथा विधिः वरण कराके 'वृतो ऽस्मि' ऐसा कहे। पुनः यजमान कहे कि "हे ब्रह्मन्! आप यथा-विहित कर्म करो"। तब 'करवाणि' इस प्रकार ब्रह्मा कहे। तदनन्तर अग्नि से दक्षिण-भाग में पहिले से ही अष्ट-दल पद्म पर पूर्वाग्र तीन कुशाओं का १ आसन ब्रह्मा के बैठने के लिये बिछा कर रखे। पुनः अग्नि के पूर्व की तरफ से ब्रह्मा को प्रदक्षिणा-क्रम से दक्षिण-दिशा में लाकर कहे कि-'इस कर्म्म में तुम ब्रह्मा बनो'। 'भवानि'-अर्थात् मैं यहाँ ब्रह्मा हो गया हूँ-इस प्रकार ब्रह्मा कहे। तदनन्तर ब्रह्मा को पूर्व कल्पित-कुशासन पर उत्तराऽभिमुख करके विराजमान करे। यदि प्रत्यक्ष ब्रह्मा न हो तो ५० कुशाओं का ब्रह्मा बना लेना चाहिये। यथा पञ्चाशत्कुशको ब्रह्मा, तदर्धं त्वत्र विष्टरः। ऊर्ध्वकेशो भवेद् ब्रह्मा, लम्बकेशस्तु विष्टरः। दक्षिणावर्तको ब्रह्मा, वामावर्त्त स्तु विष्टरः ।।इति।। पुनः प्रणीता-पात्र को जल से भरकर तथा उसे तीन-कुशाओं से ढककर, अनुमति लेने के लिये ब्रह्मा का मुख देखकर, अग्नि से उत्तर में पूर्वाग्र तीन-कुशाओं के आसन पर रख दे।

इसके अनन्तर हवन वेदी के चारों ओर कुशाओं का परिस्त, रण करे। यथा अग्निकोण से ईशान कोण तक चार कुशाएँ, ब्रह्मा से अग्नि पर्यन्त पूर्वाग्र भाग करके चार कुशाएँ, नैर्ऋत्य-कोण से वायव्य कोण तक चार कुशाएँ, तथा अग्नि से प्रणीता पात्र पर्यन्त पूर्वाग्र-भाग करके चार कुशाएँ यथा क्रम बिछावे। इस प्रकार वेदी के चारों ओर ४.४ कुशायें बिछाने से कुल १६ कुशाएँ हुईं। तदनन्तर अग्नि से उत्तर-भाग में पश्चिम से पूर्व तक क्रमशः पवित्रच्छेदन के लिए तीन कुशाएँ तथा पवित्र बनाने के लिए दो कुशाएँ (जिनके भीतर अन्य कोई कुशा न हो, और जिनका अग्र भाग खण्डित न हो ऐसी) रखे। तत्पश्चात् प्रोक्षणी पात्र, घृतस्थाली, गोघृत, सम्मार्जन के लिये बद्ध पाँच कुशाएँ, प्रादेश मात्र ढाक की तीन समिधाएँ, स्रुवा, शुचिः, उपयमन निमित्त वेणी-रूप तीन कुशाएँ तथा ब्रह्मा के लिए २५६ मुट्ठियाँ चावल जिसमें आ सकें ऐसा एक ताँबे या पीतल का पूर्ण-पात्र आदि समस्त वस्तुएँ वहाँ स्थापित करदे। पुनः पवित्रच्छेदन की तीन कुशाओं से प्रादेश मात्र दो पवित्र छेदन करे, फिर दक्षिण हाथ से सपवित्र प्रणीता के जल को तीन बार प्रोक्षणी पात्र में डाले। पुनः दोनों हाथों के अनामिका-अंगुष्ठ से उत्तराग्र पवित्र पकड़ कर प्रोक्षणी पात्रस्थ जल का तीन बार उत्पवन करे। फिर प्रोक्षणी पात्र को बाँये हाथ में उठाकर, सीधे हाथ के अनामिका-अंगुष्ठ में पवित्र लेकर

प्रोक्षणी-जल का तीन बार उदिंगन करे। पुनः प्रणीतोदक द्वारा प्रोक्षणी-पात्र का प्रोक्षण (अभिसेचन न) करे। पुनः प्रोक्षणी जलसे पवित्रद्वारा यथाऽऽसादित वस्तुओं का अभिसेचन करे। पश्चात् अग्नि तथा प्रणीता-पात्र के मध्यस्थ प्रोक्षणी-पात्र को स्थापित कर दे। पुनः आज्य-स्थाली में घी को भर कर प्रज्वलित-अग्नि पर तपाने के लिये रख दे। एक तिनके वा कुशा को अग्नि से जलाकर प्रदक्षिण क्रम से अग्नि के चारों-ओर फिरा कर, उसे अग्नि में फेंक देवे। पुनः स्रुवा को अधोमुख करके अग्नि पर तपावे। पुनः पास में रखी हुई सम्मार्जन-कुशाओं के अगले भाग से स्रुवा के भीतर का, और मूल भागसे बाहिर का सम्मार्जन [झाड़पोंछ] करे। पुनः स्रुवा पर प्रणीतोदक से पवित्र द्वारा छींटे लगाकर पुनः उसे तीनबार तपा कर अग्नि से दक्षिण-भाग में रख देवे, इसी प्रकार शुचिका भी संस्कार करे। पुनः सम्मार्जन कुशाओं को अग्नि में फेंक देवे। पुनः तपे हुए घी को अग्नि से उतार कर अग्नि से उत्तर में रखे। फिर प्रोक्षणीवत् घी का भी पवित्रों द्वारा तीनबार उत्पवन करे। पुनः उस घी में जो कुछ अपवित्र तिनका, कीड़ा-आदि वस्तु हों, तो उन्हें निकाल कर फेंक देवे। और फिर प्रोक्षणी-जल का पवित्रों से उत्पवन करे। तब फिर अपने बायें–हाथ में उप–यमन–कुशाओं को लेकर तथा खड़े होकर प्रजापति को मन में स्मरण करता हुआ घी में भिगोकर ढाककी तीन–समिधाएं

मौन होकर एक-एक कर अग्नि में चढ़ावे। फिर बैठकर सपवित्र प्रोक्षणी-जलकी धारा वेदीके ईशानकोण से लेकर उत्तर दिशा पर्यन्त परिक्रमण-विधिसे अग्निके चारों-ओर गिरावे, और पवित्रों को प्रणीता'पात्र पर रख देवे। प्रोक्षणी'पात्र का विसर्जन करके यजमान अपने बाँये'घुटने को पृथ्वी से लगाकर, एवं एक लम्बी कुशा द्वारा ब्रह्मा से अन्वारब्ध [सम्मिलित] होकर प्रज्वलित'अग्नि में स्रुवा से घृताहुतियों का होम करे, आहुति देने के पश्चात् स्रुवा में जो हुतशेष का घी है, उसे प्रोक्षणी पात्र में प्रक्षेप करता जावे। 'स्वाहान्ते जुहुयाद्धोता, स्वाहया सह वा हविः [प० का०]' स्वाहा के अन्त में हवि को मृगी मुद्रा द्वारा अग्नि में प्रक्षेप करना शास्त्र' सम्मत है। प्रजापति का मन में ध्यान करता हुआ पूर्वाधार की आहुति मौन होकर देवे और आगे स्वयं यजमान स्वाहा के अन्तमें 'इदं न मम' बोलता हुआ आहुतियाँ देवे। दो आधारकी, दो'आज्य'भागकी, तीन महाव्याहृतियों' की, पाँच, 'सर्व प्रायश्चित्त' की, एक'प्राजापत्य की, तथा एक'स्विष्टकृत्, की, ये सब १४ आहुतियाँ त्यागों सहित देवे। पुनः संस्रव' प्राशन करे। पुनः हस्तप्रक्षालन एवं आचमन करे। पश्चात् संकल्प-पूर्वक ब्रह्माजी को पूर्णपात्रसहित दक्षिणा दान करे ॥ इति कुशकण्डिका-विधिः ॥

**हस्तमात्रपरिमितां चतुरस्रभूमिं त्रिभिर्दर्भैः परिसमुह्य, तान्कुशानैशान्याञ्च, परित्यज्य,**

गोमयोदकेनोपलिप्य, स्रुवमूलेन स्फ्येन वोत्तरोत्तरक्रमेण त्रिरुल्लिख्योल्लेखनक्रमेणाऽनामिकाङ्गुष्ठाभ्यांकिञ्चिन्मृदमुद्धृत्यै , शान्यां क्षिपेत्, ततस्तं देशञ्जलेनाभिषिच्य, काँस्यभाजनेग्निमादाय, तत्प्रत्यङ्मुखं निदध्यात् ।। अथ ब्रह्मवरणम्—ॐअद्य कर्तव्यनामकरणसंस्कारान्तर्गत होमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मकर्त्तुममुकगोत्रममुकशर्म्माणं ब्राह्मणमेभिः पुष्पचन्दनताम्बूलवासोभिर्ब्रह्मत्वेन त्वामहंवृणे ।। ॐ वृतोऽस्मीति प्रतिवचनम् ।। 'ॐ यथाविहितं कर्म कुर्विति'-यजमानेनाभिहिते । ॐकरवाणि-इति प्रतिवचनानन्तरं—अग्नेर्दक्षिणतः शुद्धंकमंलासनं दत्त्वा तदुपरि प्रागग्रान्कुशानास्तीर्यास्मिन्—(नामकरण संस्कार) कर्मणि त्वं मे ब्रह्मा भवेत्यभिधाय । ॐ भवानीति तेनोक्ते—अग्नेः पूर्वादिग्भागतः प्रदक्षिणं कारयित्वा, ब्रह्माणमुत्तराभिमुखं कृत्वा

कल्पितासने चोपवेशयेत् ॥ पुनः ॥ प्रणीता-
पात्रं पुरतः कृत्वा, वरिणा परिपूर्य, कुशै-
राच्छाद्य, ब्रह्मणो मुखमवलोक्याग्नेरुत्तरतः
कुशोपरि निदध्यात् ॥ ततः (कुशपरिस्त-
रणम्)—बर्हिषश्चतुर्थभागमादायाऽऽग्नेया-
दीशानान्तम् ॥ १ ॥ ब्रह्मणोऽग्निपर्यन्तम्
॥२॥ नैर्ऋत्याद्वायव्यान्तम्, ॥३॥ अग्नितः
प्रणीतापर्यन्तम् ॥ ४ ॥ ततोऽग्नेरुत्तरतः
पश्चिमदिशि वा पवित्रच्छेदनार्थं साग्रम-
नन्तर्गर्भं कुशपत्रत्रयम्, पवित्रार्थं कुशपत्र-
द्वयम्। प्रोक्षणीपात्रमाज्यस्थाली, संमार्ज-
नकुशाः पञ्च। उपयमनार्थं वेणीरूपकुशाः
सप्त ॥ प्रादेशमात्राः पालाशसमिधस्तिस्रः।
स्रुवः। आज्यम्। तण्डुलपूर्णपात्रमेतानि-
पवित्रच्छेदनकुशानांपूर्वपूर्वदिशि क्रमेणाऽऽ-
सादनीयानि ॥ ततः—पवित्रच्छेदनार्थकुशैः
प्रादेशमितपवित्रे च्छित्वा, (पवित्रच्छेदन-
विधिः) द्वयोरुपरि त्रीणि निधाय, द्विमूलेन

प्रदक्षिणीकृत्य, सर्वाणि युगपद् धृत्वा, अनामिनाङ्गुष्ठाभ्यां च्छित्वा, द्वौ ग्राह्यौ-त्रिस्त्याज्यः । सपवित्र-दक्षिणपाणिना । प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधाय, त्वा, त्रिरुत्पवनम् । प्रोक्षणीपात्रस्य सव्य-हस्ते करणम् । अनामिकाङ्गुष्ठाभ्यामुत्त-राग्रे पवित्रे गृहीत्वा, त्रिरुदिङ्गनम् । प्रणी-तोदकेन प्रोक्षणी-प्रोक्षणम् ॥ ततः ॥ प्रोक्ष-णीजलेन यथाऽऽसादितवस्तुसेचनं कुर्यात् ॥ ततोऽग्निप्रणीतयोर्मध्ये प्रोक्षणी पात्रनिधा-नम्, तत— आज्यस्थाल्यामाज्यनिर्वापः, आज्यमधिश्रित्य, ज्वलतृणं प्रदक्षिणं भ्राम-यित्वा वह्नौ तत्प्रक्षेपः ॥ ततस्त्रिः स्रुव-प्रतपनम् ॥ ततः सम्मार्जनकुशानामग्रैरन्त-रतो मूलैर्बाह्यतः स्रुवं संमृज्य, प्रणीतोद-केनाऽभ्युक्ष्य पुनस्त्रिः प्रतप्याऽग्नेर्दक्षिणतः कुशोपरि निदध्यात् ॥ तत-आज्यस्याग्नेर-

वतारणम्। उद्वास्याऽग्नेरुत्तरतो निदध्यात्॥ तत-आज्यस्य प्रोक्षणीवदुत्पवनम्। आज्यमवेक्ष्य सत्यपद्रव्ये तन्निरसनम्। ततः पूर्ववत्प्रोक्षण्युत्पवनम्। तत उत्थायोपयमनकुशानादाय प्रजापतिं मनसा ध्यात्वा, तूष्णीमग्नौ घृताक्ता स्तिस्रः समिधः क्षिपेत्॥

अथोपविश्य सपवित्रप्रोक्षणीजलेनाग्निं प्रदक्षिणक्रमेण पर्युक्ष्य, प्रणीतापात्रे पवित्रे धृत्वा, कुशेन ब्रह्मणाऽन्वारब्धः, पातितदक्षिणजानुः, समिद्धतमेऽग्नौ स्रुवेणाऽऽज्याहुतीर्जुहुयात्। तत्राऽऽहुतिचतुष्टये प्रत्याहुत्यनन्तरं हुतशेषस्य घृतस्य प्रोक्षणीपात्रे प्रक्षेपस्तथाऽग्रिमदशाऽऽहुतिष्वपिहुतशेषस्यप्रक्षेपः

ॐ प्रजापतये स्वाहा—इदं प्रजापतये न मम (इति मनसा) ॥१॥ ॐ इन्द्राय स्वाहा—इदमिन्द्राय न मम॥ इत्याघारौ ॥२॥ ॐ अग्नये स्वाहा—इदमग्नये न मम

॥३॥ ओ३म् सोमाय स्वाहा—इदं सोमाय न मम ॥ इत्याऽऽज्यभागौ ॥४॥

ओ३म् भूः स्वाहा—इदमग्नये न मम ॥१॥
ओ३म् भुवः स्वाहा—इदं वायवे न मम ॥२॥
ओ३म् स्वः स्वाहा—इदं सूर्याय न मम ॥३॥

॥ एता महाव्याहृतयः ॥ तथा –

ओ३म् त्वन्नोऽअग्ने व्वरुणस्य व्विद्वान्देवस्य हेडोऽअवयासिसीष्ठाः । यजिष्ठो व्वह्नितमः शोशुचानो व्विश्वा द्वेषा॰ँसि प्रमुमुग्ध्यस्मत्—स्वाहा ॥४॥ इदमग्नीवरुणाभ्यां, न मम ॥ ओ३म् स त्वन्नो ऽअग्नेऽवमो भवोतीनेदिष्ठोऽअस्याऽउषसो व्युष्टौ । अवयक्ष्व नो व्वरुण॰ँ रराणो व्वीहि मृडीक॰ँ सुहवो नऽएधि-स्वाहा ॥५॥ इदमग्नीवरुणाभ्यां, न मम ॥ ओ३म् अयाश्चाग्नेऽस्यनभिशस्तिपाश्च सत्यमित्व मयाऽअसि । अयानो यज्ञं व्वहास्य यानो धेहि भेषज॰ँ स्वाहा ॥६॥ इदमग्नये अयसे, न मम । ओ३म्

ये ते शतं व्वरुणं ये सहस्रं यज्ञियाः पाशा वितता महान्तः। तेभिर्न्नोऽअद्य सवितोत व्विष्णुर्व्विश्श्वे मुञ्चन्तु मरुतः स्वर्क्काः स्वाहा ॥७॥ इदं वरुणाय, सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च, न मम ॥ ॐ उदुत्तमं व्वरुणपाशमस्म्मदवाधमं व्विमद्ध्यम ँ श्रथाय। अथा व्वयमादित्यव्व्रतेतवानागसोऽअदितये स्याम-स्वाहा ।८।इदं वरुणायाऽऽदित्यायादितयेच, न मम।

एताः सर्वप्रायश्चित्ताऽऽहुतयः ॥ तदनन्तर गणेशादि देवताओं को नाममन्त्रों द्वारा आहुतियाँ देवै

### ❁ अथ द्वादश विनायक देवानां होमः ❁

ॐ महागणाऽधिपतये नमः स्वाहा ।१। ॐ विनायकाय नमः स्वाहा ।२। ॐ गजवक्त्राय नमः स्वाहा ।३। ॐ भालचन्द्राय नमः स्वाहा ।४। ॐ उपेन्द्राय नमः स्वाहा ।५। ॐ विघ्नविनाशाय नमः स्वाहा ।६। ॐ शिवसुताय नमः स्वाहा ।७। ॐ हरिनन्दनाय नमः स्वाहाः ।८। ॐ हेरम्बाय नमः स्वाहा ।९। ॐ लम्बोदराय नमः स्वाहा ।१०। ॐ कार्त-

वीर्याय नमः स्वाहा ।११। ॐ महावीर्याय नमः स्वाहा ।१२।

※ अथ षोडश-मातृका होमः ※

ॐ गौर्यै नमः स्वाहा ।१। ॐ पद्मायै नमः स्वाहा ।२। ॐ शच्यै नमः स्वाहा ।३। ॐ मेधायै नमः स्वाहा ।४। ॐ सावित्र्यै नमः स्वाहा ।५। ॐ विजयायै नमः स्वाहा ।६। ॐ जयायै नमः स्वाहा ।७। ॐ देव सेनायै नमः स्वाहा ।८। ॐ स्वधायैनमः स्वाहा ।९। ॐ स्वाहायै नमः स्वाहा ।१०। ॐमातृभ्यो नमः स्वाहा ।११। ॐलोकमातृभ्यो नमः स्वाहा ।१२।ॐधृत्यै नमःस्वाहा।१३।ॐपुष्ट्यै नमः स्वाहा ।१४। ॐतुष्ट्यै नमः स्वाहा ।१५। ॐ आत्मनः कुलदेवतायै नमः स्वाहा ।१६।

※ अथ सप्तघृतमातृका होमः ※

ॐ श्रियै नमः स्वाहा।१। ॐलक्ष्म्यै नमः स्वाहा ।२। ॐ धृत्यै नमःस्वाहा ।३। ॐमेधायै नमः स्वाहा ।४। ॐ स्वाहायै नमः स्वाहा ।५। ॐ प्रज्ञायै नमः स्वाहा ।६। ॐ सरस्वत्यै नमः स्वाहा ।७।

❀ अथ सप्त स्थिर मातृका होमः ❀

ॐब्राह्म्यै नमः स्वाहा ।२। ॐ माहेश्वर्यै नमः

स्वाहा ।२। ॐ कौमार्यै नमः स्वाहा ।३। ॐ वैष्णव्यै नमः स्वाहा ।४। ॐ वाराह्यै नमः स्वाहा ।५। ॐ इन्द्राण्यै नमः स्वाहा।६।ॐ चामुण्डायै नमः स्वाहा।७।

* अथ पञ्चौंकारदेवता होमः *

ॐ ब्रह्मणे नमः स्वाहा ।१। गायत्र्यै नमः स्वाहा ।२। ॐ गोवर्द्धनाय नमः स्वाहा ।३। ॐ पृथिव्यै नमः स्वाहा ।४। ॐ यज्ञपुरुषाय नमः स्वाहा ।५।

* अथ नवग्रहदेवता होमः *

ॐ सूर्य्याय नमः स्वाहा ।१। ॐ चन्द्राय नमः स्वाहा ।२। ॐ भौमाय नमः स्वाहा ।३। ॐ बुधाय नमः स्वाहा ।४। ॐ गुरवे नमः स्वाहा ।५। ॐ शुक्राय नमः स्वाहा ।६। ॐ शनैश्चराय नमः स्वाहा ।७। ॐ राहवे नमः स्वाहा ।८। ॐ केतवे नमः स्वाहा ।९।

अथ नवग्रहाधिदेवतानां होमः *

ॐ ईश्वराय नमः स्वाहा ।१। ॐ उमायै नमः स्वाहा ।२। ॐस्कन्दाय नमः स्वाहा ।३। ॐ विष्णवे नमः स्वाहा ।४। ॐ ब्रह्मणे नमः स्वाहा ।५। ॐ इन्द्राय नमः स्वाहा ।६। ॐ यमाय नमः स्वाहा ।७। ॐ कालाय नमः स्वाहा ।८। ॐ चित्रगुप्ताय नमः स्वाहा ।९।

* अथ नवग्रह प्रत्यधिदेवतानां होमः *

**ॐ अग्नये नमः स्वाहा । १ । ॐ अद्भ्यो नमः स्वाहा ।२। ॐ पृथिव्यै नमः स्वाहा ।३। ॐ विष्णवे नमः स्वाहा । ४ । ॐ इन्द्राय नमः स्वाहा । ५ । ॐ इन्द्राण्यै नमः स्वाहा ।६। ॐ प्रजापतये नमः स्वाहा । ७ । ॐ सर्पेभ्यो नमः स्वाहा । ८ । ॐ ब्रह्मणे नमः स्वाहा । ९ ।**

* अथ पञ्चलोकपालदेवतानां होमः *

**ॐ गणपते नमः स्वाहा । १ । ॐ दुर्गायै नमः स्वाहा ।२। ॐ वायवे नमः स्वाहा । ३ । ॐ आकाशाय नमः स्वाहा ।४। ॐ अश्विभ्यां नमः स्वाहा।५।**

* अथ दशदिग्पाल देवता होमः *

**ॐ इन्द्राय नमः स्वाहा । १ । ॐ अग्नये नमः स्वाहा । २ । ॐ यमाय नमः स्वाहा ।३। ॐ निर्ऋतये नमः स्वाहा ।४। ॐ वरुणाय नमः स्वाहा । ५ । ॐ वायवे नमः स्वाहा । ६ । ॐ कुबेराय नमः स्वाहा ।७। ॐ ईश्वराय नमः स्वाहा । ८ ।ॐ ब्रह्मणे नमः स्वाहा । ९ । ॐ अनन्ताय नमः स्वाहा । १० । ॐ क्षेत्रपालाय नमः स्वाहा । ११ ।**

तदनन्तर जिस नक्षत्र में बालक का जन्म हुआ हो, उस नक्षत्र-मन्त्र की चार-चार आहुतियाँ देवै—

अथादौ-अश्विनीमन्त्रः ॐ यावांकशामधुम-
त्यश्विना सूनृतावती । तया यज्ञम्मिमिक्षतम्
स्वाहा।१। भरणी मन्त्रः-ॐ यमाय त्वा मखाय
त्वा सूर्य्यस्य त्वा तपसे। देवस्त्वा सविताम्ध्वा-
नक्तु पृथिव्व्याः स ᳪ स्पृशस्पाहि । अर्च्चिरसि
शोचिरसि तपोसि स्वाहा।२। कृत्तिकामन्त्रः—ॐ
अग्निन्दूतम्पुरोदधे हव्व्यवाहमुपब्ब्रुवे । देवाँ २
ऽआसादयादिह-स्वाहा।३। रोहिणी मन्त्रः-ॐ प्रजा-
पतेनत्वदेतान्न्यन्न्यो व्विश्वारूपाणि परिता बभूव।
यत्कामास्ते जहुमस्तन्नोऽअस्तु व्वय ᳪ स्यामपतयो
रयीणाम्-स्वाहा ।४। मृगशीर्षमन्त्रः-ॐ सोमो
धेनु ᳪ सोमोऽअर्व्वन्तमाशु ᳪ सोमो व्वीरंकर्म्म-
ण्यन्ददाति । सादन्न्यम्विवदत्थय ᳪ सभेयम्पितृ
श्रवणं य्यो ददाशदस्मै-स्वाहा।५। आर्द्रा मन्त्रः—
ॐ इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभ-
रामहे मतीः। यथा शमसद्विपदे चतुष्पदे व्विश्व-
म्पुष्टङ् ग्रामेऽअस्मिन्ननातुरम्-स्वाहा । ६ । पुन-
र्वसुमन्त्रः—ॐ अदितिर्द्यौ रदितिरन्तरिक्षमदिति
र्माता स पिता स पुत्रः। व्विश्वेदेवाऽअदितिः
पञ्चजनाऽ अदितिर्ज्जातमदितिर्ज्जनि त्वम्-स्वाहा

।७। पुष्यमन्त्रः—ॐ बृहस्पतेऽअतियदर्य्योऽअर्हाद्युमद्विभाति क्क्रतुमज्जनेषु । यद्दीदयच्छवसऽऋत-प्प्रजाततदस्मासु द्रविणन्धेहि चित्रम्-स्वाहा । ८ । आश्लेषा-मन्त्रः—ॐ नमोस्तु सर्प्पेब्भ्यो ये के च पृथिवी मनु । येऽअन्तरिक्षे ये दिवि तेब्भ्यः सर्प्पेब्भ्यो नमः । ९ । मघामन्त्रः ॐ उदीरतामवरऽउत्प-रासऽउन्मध्यमाः पितरः सोम्या सः । असुँय्यऽ-ईयुर व्वृकाऽऋतज्ञास्तेनोवन्तु पितरो हवेषु । १० । पूर्वाफाल्गुनी मन्त्रः—भगप्प्रणेतर्ब्भगसत्यराधो भगे मान्धियमुदवाददन्नः । भगप्प्रनोजनय गोभिरश्श्वैर्भग प्प्रनृभिर्न्नृवन्तः स्याम-स्वाहा । ११ । उत्तरा-फाल्गुनी मन्त्रः—ॐ अर्य्यमणं बृहस्पतिमिन्द्रन्दानाय चोदय । व्वाचं व्विष्णु ँ सरस्वती ँ सवितारञ्च व्वाजिन ँ स्वाहा । १२ । हस्त मन्त्रः—ॐ उदुत्यञ्जातवेदसन्देवं व्वहन्ति केतवः । दृशे व्विश्श्वाय सूर्य्यम्-स्वाहा । १३ । चित्रामन्त्रः—ॐ त्वष्टा तुरीपोऽअद्भुतऽइन्द्राग्ग्नी पुष्टिव्वर्द्धना । द्विपदाच्छन्दऽइन्द्रियमुक्षागौर्न्न व्वयो दधुः स्वाहा । १४ । स्वातीमन्त्रः—ॐ व्वायुरग्ग्रे गायत्रप्प्रीः साकंगन्मनसा यज्ञम् । शिवो नियुद्भिः शिवाभिः

स्वाहा ।१५। विशाखा मन्त्रः—ॐ इन्द्राग्नीऽआगत ᳪ सुतंगीर्भिर्न्नभो व्वरेण्यम् । अस्य पातन्धियेषिता-स्वाहा । १६ । अनुराधा मन्त्रः-ॐ नमो मित्त्रस्य व्वरुणस्य चक्षसे महोदेवा यत हृत ᳪ सपर्य्यत । दूर हृशे देवजाताय केतवे दिवस्पुत्त्राय सूर्य्यायश ᳪ सत-स्वाहा । १७ । ज्येष्ठा मन्त्रः—ॐ त्त्रातारमिन्द्रमवितारमिन्द्र ᳪ हवेहवे सुहव ᳪ शूरमिन्द्रम् । ह्वयामि शक्क्रम्पुरुहूतमिन्द्र ᳪ स्वस्ति नो मघवा धात्विन्द्रः-स्वाहा । १८ । मूलमन्त्रः-ॐ माता च ते पिता च तेग्र ंव्वृक्षस्य रोहितः । प्रतिलामीति ते पितागभे मुष्टिमत ᳪ सयतु-स्वाहा । १९ । पूर्वाषाढामन्त्रः-ॐ आपाधमदभिशस्तीर शस्तिहाथेन्द्रो द्युम्न्याभवत् । देवास्तऽइन्द्रसख्याय येमिरे बृहद्भानो मरुद्गण-स्वाहा । २० । उत्तराषाढा मन्त्रः-ॐव्विश्श्वेदेवा सऽआगत शृणुतामऽइम ᳪ हवम् । एदम्बर्हिन्निषीदत । उपयाम गृहीतोसि व्विश्श्वेब्भ्यस्त्वा देवेब्भ्यऽएष ते योनिर्व्विश्श्वेब्भ्यस्त्वा देवेब्भ्यः-स्वाहा । २१ । श्रवण मन्त्रः-ॐ व्विष्णो रराटमसि व्विष्णोः श्नप्त्रेस्त्थो व्विष्णोः स्यूरसि व्विष्णोर्द्ध्रुवोसि । व्वैष्णव-

मसि व्विष्णण वेत्त्वा-स्वाहा ।२२। धनिष्ठा मन्त्रः—ॐ व्वसोः पवित्त्रमसि द्यौरसि पृथिव्व्यसि मात-रिश्श्वनो घर्म्मोसि व्विश्श्वधाऽअसि । परमेण धाम्ना ह ७ हस्वमाह्वार्म्माते यज्ञपतिह्वार्षीत्-स्वाहा । २३ । शततारका मन्त्रः-ॐ व्वरुणस्यो-त्तम्भनमसि व्वरुणस्य स्कम्भसर्ज्जनीस्थो व्वरु-णस्यऽऋतसदन्न्यसि व्वरुणस्यऽऋतसदनमसि व्वरु-णस्यऽऋतसदनमासीद-स्वाहा । २४ । पूर्वभाद्रपदा मन्त्रः-ॐ त्वन्नोऽअग्ग्ने व्वरुणस्य व्विद्वान्देवस्य हेडोऽअवयासि सीष्ठाः । यजिष्ठो व्वह्निनतमः शोशुचानो व्विश्श्वा द्वेषा ७ सि प्प्रमुमुग्ध्यस्म्मत्-स्वाहा । २५ । उत्तराभाद्रपदा मन्त्रः-ॐ अहिरेव-भोगैः पर्य्येति बाहुञ्ज्याया हेतिम्परिबाधमानः । हस्तघ्नो व्विश्श्वा व्वयुनानि व्विद्वान्नपुमान्पुमा ७ सम्परिपातु व्विश्श्वतः-स्वाहा । २६ । रेवती मन्त्रः—ॐ पूषन्तव व्व्रते व्वयन्नरिष्येम कदाचन । स्तोतारस्तऽइहस्म्मसि-स्वाहा।।२७।इति नक्षत्रहोमः ।

पुनः नीचे लिखे देवताओं को आहुतियाँ देवै-

अथतिथीशाः-वह्निर्विधाताऽद्रिसुतागणेशः सर्पो विशाखोऽदितिजो महेशः । दुर्गा यमो विश्वहरिश्च

कामः शिवः शशांकस्तिथिस्वामिनश्च–इति ।१।
अथ तिथिदेवताः–ब्रह्मा त्वष्टा हरिः कालः, सोमाऽशिवमुनयः क्रमात् । वसुः शिवश्च, धर्मश्च, चन्द्रवायू त्वनंग कः ।। अनन्तविश्वदेवौ च, पितरस्तिथिदेवता–इति । २ ।

ॐ प्रजापतये स्वाहा-इदं प्रजापतये न मम ॥९॥ (इति मनसा प्राजापत्यम्) ॥ॐ अग्नये स्विष्टकृते स्वाहा-इदमग्नये, स्विष्टकृते, न मम ॥१०॥ इति

इति स्विष्टकृद्धोमः ।। ततः संस्रवप्राशनम् ।। पवित्राभ्यां मार्जनम् ।। अग्नौ पवित्रप्रतिपत्तिः ।। ब्रह्मणे सदक्षिणां पूर्णपात्रदानम् । प्रणीतोदकेन संकल्पः-

ओमद्यैतन्नामकर्महोमकर्म्मणि कृताकृतावेक्षणरूपब्रह्मकर्म-प्रतिष्ठार्थमिदं दक्षिणासहितं पूर्णपात्रं प्रजापतिदैवतममुकगोत्रायामुकशर्मणे ब्रह्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे । (यजमानः)-'प्रतिगृह्यताम्' (ब्रह्मा) "ॐ प्रतिगृह्णामि" ।। इति ब्रह्मणे दक्षिणां दद्यात् ।। "ॐ स्वस्तीति"-प्रतिवचनम् ।

**ततः-ॐ सुमित्रिया न ऽ आप ओषधयः सन्तु' इतिपवित्राभ्यां प्रणीताजलमानीय, तेनशिरः संमृज्य-ॐ दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च व्वयं द्विष्मः।**

प्रणीतान्युब्जीकरणमग्नेः पश्चिमतः ।। ततः परिस्तरणक्रमेण बर्हिरुत्थाप्य घृतेनाभिघार्य हस्तेनैवाग्नौ जुहुयात् ।। तत्र मन्त्रः-

**ॐ देवा गातु विदो गातुं व्वित्वा गातुमित । मनसस्पतऽइमन्देव यज्ञ ७ स्वाहा व्वातेधाः-स्वाहा ।। इदं वाताय न मम ।।**

।। इति बर्हिहोमः ।। प्राङ्मुखं पुत्रमादाय नव्यवस्त्रे कुङ्कुमपिष्टतकेन धान्यपूर्णस्थाल्यां सुवर्णशलाकया वा प्रथमं कुलदेवतासम्बद्धं नाम, द्वितीयमुपेन्द्रादि-मास-नाम, तृतीयमवकहड-होडाचक्रानुसारेण नाक्षत्रं नाम, चतुर्थं सूत्राऽनुसारेण *द्व्यक्षरं चतुरक्षरं षडक्षरं वा घोषसंज्ञकमन्तःस्थाक्षरान्वितं नाम, पञ्चमं स्वेच्छाऽनुसारेण नाम लिखित्वा-

---

*किसी विद्वान्-दैवज्ञ को बुलवाकर शास्त्रोक्त-विधि से पुत्र या पुत्री का यथोचित नाम निकलवावें । उनके नामाक्षरों के मध्यस्थ-
[ग घ ङ, ज झ ञ, ड ढ ण, द ध न, ब भ म, य र ल, व ह]
इन अक्षरों में से कोई एक या दो होने आवश्यक हैं। पुरुषों के नाम सम-वर्णों के तथा स्त्रियों के नाम विषम-वर्ण वाले होने चाहिए।

**'ॐ मनो जूतिरितिमन्त्रेण प्रतिष्ठाप्य "ॐनाम देवताभ्यो नमः" इति**

इति यथोपचारैः सम्पूज्य, पुत्रस्य दक्षिण कर्णे पिता कथयति-

**भोः पुत्र ! त्वं (अमुक) कुलदेवताभक्तोऽसि ॥१॥ भोः पुत्र ! त्वं (अमुक) मास नामासि ॥२॥ भोः पुत्र ! त्वं (अमुक) नाक्षत्रनामासि ॥३॥ भोः पुत्र ! त्वं (अमुक) सूत्रानुसारेण नामाऽसि ॥४॥ भोः पुत्र ! त्वं [अमुक] व्यावहारिक नामाऽसि ॥५॥**

इति क्रमेण दक्षिणकर्णे श्रावयित्वा, शर्म्मान्तं विप्रस्य, वर्म्मा-

---

इसके साथ-साथ स्त्रियों के नाम का अन्तिम-वर्ण दीर्घस्वर वाला होना आवश्यक है। पुरुषों के नाम यथा—रुद्र, हरिदत्त, गणपतिराम आदि, एवं स्त्रियों के नाम यथा–श्री, बिमला, कलावती आदि।
तथा—नर्क्ष-वृक्ष-नदी–नाम्नीं, नान्त्यपर्वतनामिकाम् ।

न पक्ष्यहि-प्रेष्यनाम्नीं, न च भीषणनामिकाम् ॥

अर्थात्—स्त्रियों के—[ नक्षत्र ]=विशाखा, रोहिणी-आदि, [वृक्ष]=कपित्था, अश्वत्था-आदि, [ नदी ]=त्रिवेणी, नर्मदा-आदि, [अन्त्या]=चाण्डाली आदि, [ पर्वत ]=विन्ध्याचला, सुरालया—आदि, [ पक्षी ]=कोकिला, मैना आदि, [ अहि ]=नागिनी आदि, [ प्रेष्य ]=किंकरी आदि, [ भीषण ]=कराली, चण्डिका-आदि नाम सर्वथा वर्जित हैं।

न्तं क्षत्रियस्य,गुप्तान्तं वैश्यस्य,दासान्तं शूद्रस्य चनाम कुर्य्या-दिति । पुनः पिता कुलग्नादिदोषनिवारणार्थं दानादिकं कुर्य्यात् । देवब्राह्मणेभ्यो नमस्कृत्य, दक्षिणां दत्वा शुभा-शिषो गृहीत्वा, गणेशादिदेवतानां विसर्जनं कुर्यात् [पुष्पा-क्षतप्रक्षेपैः स्थापितदेवान् विसर्जयेत्-

**ॐ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वे महे । उप प्रयन्तु मरुतः सुदानवऽ इन्द्रप्रा-शूर्भवासचा ॥१॥ ॐ यान्तु देवगणाः सर्वे, स्वशक्त्या पूजिता मया । इष्टकामप्रसिद्ध-चर्थं, पुनरागमनाय च ॥ २ ॥ इति ॥**

नामकरण-संस्कार-'जन्माहे द्वादशाहे वा, दशाहे वा विशे-षतः । कुर्याद्धि नामकरणं,कुमारस्येति वै श्रुतेः ।' इस श्रुति-विधान से जन्म के दिन ही बालक का नाम-करण स्वयं पिता स्वेच्छानुसार करे । ऐसा शांख्यायन-गृह्यसूत्र का वचन पाया जाता है । बालक के नाम में दो चार वा छः अक्षर होने चाहिये, तथा नाम का प्रथमाक्षर हश्-प्रत्याहार [ह य व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड द] वाला हो क्योंकि-इन अक्षरों का घोष-प्रयत्न है । तथा नाम के बीच में यण-प्रत्याहार [य व र ल] में से कोई वर्ण हो । यह कृदन्त होना चाहिये, तद्धितीय नहो । दशरात्रिके बीतने पर उत्थापन किया जाता है । इस दिन माता-पिता एवं

बालक तीनों शिर सहित स्नान करके शुद्ध हों, पुनः नवीन वस्त्रालंकार धारण करें। 'अशौचशुद्धावेकादशेऽह्नि नाम कुर्वीत सुमुहूर्ते'-यह बचन पाया जाता है।

नामकरण-मुहूर्तः—जन्मसे ११-१२ वें दिन। अश्विनी, रोहिणी, मृग०, पुनर्वसु, पुष्य, उत्तरा ३, हस्त, चित्रा, स्वाती, अनुराधा, श्रवण, धनिष्ठा, शत०, रेवती,-ये नक्षत्र तथा रवि, भौम, गुरुवार-ये तीन वार और लग्न बल एवं सुसमय देखकर वेदविज्ञ-आचार्य वा पुरोहित को बुलवावे। आचार्य वेद विधि-अनुसार गणेशादिपञ्चदेव पूजन कराके, जन्म-नक्षत्र के चरणानुसार उस बालक का सुन्दर नाम निकाले, और पिता, आचार्य, तथा पुरोहित बालक के दक्षिण--कान में उस नाम का उच्चारण करें। ऊपर कहे गये दो प्रकार से नाम ये माता-पिता को गुप्त रखने चाहिये, जिससे कोई भी शत्रु बालक पर मारण-मोहनादि कोई उपचार न कर सके। यह गोपनीय नाम माता-पिता के अतिरिक्त और कोई भी न जाने

तीसरा व्यावहारिक प्रसिद्ध नाम ऊपर मूल में लिखित-। विधि द्वारा अपनी रुचि-अनुसार रखना चाहिए। नामकरण होते ही प्राणी पर ग्रहचक्र लग जाता है, तथा उसे इसी के अनुसार जीवन में सुख-दुःखादि भोग भोगने पड़ते हैं। शयनावस्था में अचेत हुआ प्राणी जिस नाम से जाग्रत् हो जाता है, उसी प्रसिद्ध नाम से व्यवहार में गोचर-ग्रहों का फलादेश विचारना चाहिए॥ इति नामकरण संस्कार विधिः॥

## ❀ अथ निष्क्रमण-संस्कार विधिः ❀

इस संस्कार में बालक को चौथे महीने में प्रथम सूर्याव-लोकन कराया जाता है,जिससे उसमें आयु एवं कान्ति बढ़े ।

तत्र चतुर्थ-मासि चन्द्रतारानुकूले यात्रोक्तशुभमुहूर्त-दिने बालकस्य गृहा निष्क्रमणं कुर्य्यात् । शिशुना सहितः प्रभाते पिता मङ्गलद्रव्यैश्च स्नात्वा, शुभासने च स्थित्वाऽऽचम्य प्राणानायम्य ।। देशकालौ संकीर्त्य सङ्कल्पं कुर्यात्—ॐ अद्येत्यादि० ममास्य जातस्यात्मजस्य समस्त-रोगादिनिबर्हणपूर्वकमायुर्मेधाऽभिवृद्ध्यर्थं श्रीनारायण प्रीत्यर्थञ्च गृहाद् बालकस्य निष्क्रमणमहं करिष्ये । तत्राऽऽदौ-निर्विघ्नतयाकार्यसिद्ध्यर्थं श्रीगणेशादिदेवतापूजनं मातृका पूजनं पुण्याहवाचनं नान्दीश्राद्धादिककर्म्ममहं करिष्ये ।।इति सङ्कल्पः ।। अथाऽष्टदले पद्मे गणपतिपूजनं मातृकापूजनं पुण्याहवाचनं नान्दीश्राद्धं चकुर्यात् ।। ततःपिताऽलंकृतं बालकं सुशकुने मातुत आदाय गृहान्निष्क्रम्य, ॐ तच्चक्षुरितिमन्त्रेण सूर्यप्रदर्शयेत्—

**ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतञ्जीवेम शरदः शत ँ श्रृणुयाम शरदः शतम्प्रब्रवाम शरदः शतमदीनाःस्याम शरदःशतम्भूयश्च शरदः शतात् ।।**

इत्यनेन सूर्यं दर्शयित्वा तं संपूज्य, फलपुष्पयुतं पयसार्घ्यञ्चदद्यात्—

**ॐ आ कृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतम्मर्त्यञ्च। हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥ ॐ एहि सूर्य्य! सहस्त्रांशो! तेजोराशे जगत्पते अनुकम्पय मां भक्त्या, गृहाणाऽर्घ्यं दिवाकर ॥ इति सूर्य्यायार्घ्यं दत्त्वा प्रणमेत्-ॐ ध्येयः सदा सवितृमण्डलमध्यवर्ती, नारायणः सरसिजासनसन्निविष्टः ॥ केयूरवान्मकरकुण्डलवान् किरीटी, हारी हिरण्मयवपु धृतशङ्खचक्रः ॥१॥ नमो नमस्तेऽस्तु सदा विभावसो!, सर्वात्मने सप्तहयाय भानवे। अनन्तशक्तिर्मणिभूषणेन, ददस्व भुक्ति मम मुक्तिमव्ययाम् ॥२॥ [illegible] बालकमादाय देवाल[illegible] गत्वा देवं प्रणमेत् ॥**

पुनर्गृहमागत्य सुवासिनोभिर्नीराज्य दशब्राह्मणान् भोजयेत्। आचार्य्यादि ब्राह्मणेभ्यो दक्षिणां दत्वा तेभ्य

आशिषो गृहीत्वा, ॐ यान्तु देवगणाः सर्वे०-इति देवविसर्जनम् ।। अद्यैव रात्रौ शुभवेलायां निम्नमन्त्राभ्यां चन्द्रमसं प्रदर्शयेत्-

**ॐ दधिशङ्खतुषाराभं, क्षीरोदार्णव संभवम्।**
**नमामि शशिनंसोमं, शम्भोर्मुकुटभूषणम्।।१।।**

।। इति निष्क्रमण-विधिः ।।

निष्क्रमण-संस्कार का रहस्य-सूर्य चन्द्र एवं दर्पण आदि के प्रकाश से बालक की नेत्र ज्योति निर्बल [कमजोर] न हो जाय। इस सिद्धान्त से तीन-मास तक बालक को घर के भीतर ही प्रायः रखते हैं। पुनः चतुर्थ मास के आरम्भ में किसी दैवज्ञ द्वारा सुमुहूर्त निकलवायें तथा उनके द्वारा कही गई शास्त्र-विधि से बालक को सूर्य-चन्द्रावलोकन कराना चाहिये। बालक को चौथे मास में बाहिरी खुली हुई वायु-सेवन करने को मिलेगी तथा-चन्द्र-दर्शनादि से उसे आनन्द प्राप्त होगा। क्योंकि चित्त की प्रसन्नता से ही बालक का शरीर पुष्ट बनता है।। इति निष्क्रमण-संस्कार रहस्य ।।

## ❀ अथान्नप्राशन विधिः ❀

तत्र षष्टेऽष्टमे वा मासि पूर्ण सम्वत्सरे वा बालकस्यान्नप्राशनं कुर्यात्। कन्यायास्तु पञ्चमे सप्तमे वामासि तत्र ज्योतिः शास्त्रोक्तसुमुहूर्ते चन्द्रताराऽनुकूलदिवसे, पिता कृत-नित्यक्रियः शुचिः शुक्लवासाः गणपत्यादिपञ्चाङ्गदेवताः सम्पूज्य, प्रतिज्ञासंकल्पं कुर्यात -

**देशकालाद्युच्चार्याद्याऽमुकोऽहममुकराशेरस्य बालकस्य मातृगर्भापूतमलादिप्राशनशुद्धचर्थमन्नाद्यब्रह्मवर्चसतेज इन्द्रियायुर्बललक्षण सिद्धये, बीजगर्भसमुद्भवनिखिलपाप निबर्हणद्वारा श्रीपरमेश्वरप्रीतये ऽन्नप्राशनकर्म्म करिष्ये ॥**

ततः हस्तमात्रपरिमितां चतुरस्रां होमार्थं वेदीं विरच्य तत्र पञ्चभूसंस्कारपूर्वकं मन्त्रेणाऽग्निञ्च *संस्थाप्यादौ वेदविदाचार्य्यब्रह्मणोर्वरणं कुर्य्यात् ॥ संकल्पः-

**ॐ अद्येहामुकोऽहममुकराशेः पुत्रस्यान्नप्राशनाङ्गहोमकर्मणि आचार्य्यब्रह्मणोःपूजनपूर्वक वरणं करिष्ये ॥**

---

*तत्र मन्त्रः ॐ अग्निन्दूतम्पुरोदधे हव्यवाहमुपब्रुवे : देवां २ ऽआसादयादिह ॥

कर्मविशेषेऽग्निनामानि-पावको लौकिके ह्यग्निः प्रथमः सम्प्रकीर्तितः । अग्निस्तु मारुतो नाम गर्भाधाने विधीयते ॥ ततः पुंसवने ज्ञेयः पवमानस्तथैव च । सीमन्ते मंगलो नाम, प्रबलो जातकर्मणि ॥ नाम्नि वै पार्थिवो ह्यग्निः, प्राशने तु शुचिः स्मृतः । सभ्यनामा तु चूडायां, व्रतादेशे समुद्भवः ॥ गोदाने सूर्यनामास्याद्वैश्वानरो विसर्गके । विवाहे योजको नाम, चतुर्थ्यां शिखिनामकः ॥ आवसथ्ये द्विजो ज्ञेयो, वैश्वदेवे तु पावकः । प्रायश्चित्ते तु विट् चैव, पाकयज्ञेषु

इति सङ्कल्प्याचार्य्यब्रह्मणोर्वरणं कृत्वा, स्वर्णयुतञ्च कलशं संस्थाप्य, तत्र ब्रह्मवरणसहिताऽऽदित्यादिनवग्रहानावाह्य पूजनञ्च विधाय, तत्रब्रह्मोपवेशनादि-आसादनान्ते विशेषोपकल्पनीयानि वस्तून्या सादयेत् [ अन्नादिव्यञ्जनं, रसाश्च मधुसक्तुघृतानि, पुस्तकशस्त्राणि, निज-वृत्तिचिह्नानि च संस्थाप्य ] पर्युक्षणान्तं कार्यं विधाय, [चर्वाज्य द्रव्यत्यागसङ्कल्पं-कुर्यात् ]-

**ॐ अद्येहामुकोऽहमुकराशेः पुत्रस्यान्नप्राशनहोमकर्मणा प्रजापतिं, इन्द्रं, अग्निं, सोमं, वाग्देवीं, वाजमाज्येन । तथा-प्राणमपानं चक्षुः श्रोत्रञ्चाज्यचरुणा । स्विष्टकृतमाज्येन, महाव्याहृतिदेवताः सर्वप्रायश्चित्तदेवताः प्रजापतिञ्च यक्ष्ये । इदं चर्वाज्यं मया तेभ्यः परित्यक्तम्-ॐतत्सद्यथादैवतमस्त्वति ।**

---

पावकः ।। देवानां हव्यवाहश्च, पितृणां कव्यवाहनः । शान्तिके वरदः प्रोक्तः पौष्टिके बलवर्द्धनः ।। पूर्णाहुत्यां मृडो नाम, क्रोधाऽग्निश्चाभिचारके । वश्यार्थे कामदो नाम, वनदाहे तु दूषकः ।। कुक्षौ तु जाठरो ज्ञेयः, क्रव्यादो मृतदाहके । वृषोत्सर्गेऽध्वरो नाम, शुचये ब्राह्मणः स्मृतः ।। समुद्रे वाडवो ह्यग्निः, क्षये सम्वर्तकस्तथा । ब्रह्मा वै गार्हपत्ये स्याद्दक्षिणाग्ना-वथेश्वरः ।। विष्णुराहवनीये स्यादग्निहोत्रे त्रयोऽग्नयः । लक्षहोमेऽभीष्टद: स्यात्कोटिहोमे महाशनः ।। इति ।।

एवंत्यागं विधाय,तत्र वेद्यां पञ्चभूसंस्कारपूर्वकं "शुचि-नामानमग्निं" संस्थाप्य-

**ॐ एतन्ते देव० इति मन्त्रेण ॐ भूर्भुवः स्वः शुचिनामाग्ने! इहागच्छेह-तिष्ठ, सुप्रतिष्ठितो वरदो भवेति-**

प्रतिष्ठाप्य ततोऽग्निं ध्यायेत्-

**ॐ चत्वारि शृङ्गेति [illegible] देवऋषिः, त्रिष्टुप्छन्दः, अग्निर्देवता, अग्निध्याने विनियोगः। हस्ते पुष्पाण्यादाय-ॐ चत्वारि शृङ्गा त्रयोऽअस्य पादा द्वे शीर्षे सप्त हस्तासोऽअस्य। त्रिधा बद्धो वृषभो रोरवीति-महादेवो मर्त्त्याँ २ऽआविवेश॥ ॐ अग्नि प्रज्वलितं वन्दे, जातवेदं हुताशनम्। हिरण्यवर्णममलं, समृद्धं विश्वतोमुखम्॥**

इत्यग्निं ध्यात्वा-"ॐ शुचिनामाग्नये नमः" इति नाममन्त्रेणाऽऽवाहनादि-नीराजनान्तं सम्पूज्य, कुशकण्डिकां विधाय, दक्षिणं जान्वाच्य, ब्रह्मणान्वारब्धो [मनसा] प्रजापतिं जुहुयात्-

**ॐ प्रजापतये स्वाहा-इदं प्रजापतये, न**

मम ॥१॥ ( तत्रप्रथमाहुतिचतुष्टये स्त्रुवावस्थितहुतशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः )।
ॐ इन्द्राय स्वाहा-इदमिन्द्राय, न मम ॥२॥
ॐ अग्नये स्वाहा-इदमग्नये, न मम ॥३॥
ॐ सोमाय स्वाहा-इदं सोमाय, न मम ॥४॥

ततोऽ*द्वे घृताऽऽहुतीर्जुहोति-

ॐ देवीवाचमिति-श्रीभार्गवऋषिस्त्रिष्टुप्छन्दो, देवीवाग्देवता, घृताऽऽहुतिहवने-विनियोगः ॥ ॐ देवीम्वाचमजनयन्त देवास्तां व्विश्श्वरूपाः पशवो व्वदन्ति । सा नो मन्द्रेषमूर्ज्जन्दुहाना धेनुर्व्वागस्मानुप सुष्टुतैतु—स्वाहा । इदं-वाचे, न मम ॥१॥
ॐ व्वाजो न-इति देवा ऋषयस्त्रिष्टुप्छन्दः, अन्नं-देवता, घृताऽऽहुतिहवने-विनियोगः ॥
ॐ व्वाजो नोऽअद्यप्र सुवाति दानं व्वाजो देवाँ२ऽऋतुभिःकल्पयाति व्वाजो हि मा सर्व्ववीरञ्जजान विश्श्वाऽआशा व्वाजप-

*ततोऽन्वारब्धं विना, साधारणाहुतिद्वयम् ।

**तिर्ज्जयेय७-स्वाहा। इदं वाजाय, न मम।।२।।**

ततः स्रुवेण चरुमभिघार्य्याऽऽज्यप्लुतेन स्थालीपाकेन जुहोति-

**ओ३म् प्राणेनान्नमशीय-स्वाहा। इदं प्राणाय, न मम।।१।।ओ३म्अपानेन गन्धानशीय-स्वाहा। इदमपानाय, न मम ।।२।। ओ३म् चक्षुषा रूपाण्यशीय-स्वाहा। इदं चक्षुषे, न मम ।।३।। ओ३म् श्रोत्रेण यशोऽशीय-स्वाहा। इदं श्रोत्राय, न मम ।।४।।**

तत आज्यचरुभ्यां ब्रह्मणाऽन्वारब्धोहविर्जुहुयात्-

**ओ३म् अग्नये स्विष्टकृते-स्वाहा। इदमग्नये स्विष्टकृते ।।**

तत आज्येन भूराद्या नवाहुतीर्जुहुयात्-

**ओ३म् भूः स्वाहा-इदमग्नये, न मम ।।१।। ओ३म् भुवः स्वाहा-इदं वायवे, न मम ।।२।। ओ३म् स्वः स्वाहा-इदं७ सूर्य्याय, न मम ।।३।। ओ३म्त्वन्नोऽअग्ने०-इदमग्नीवरुणाभ्याम्, न मम ।।४।। ओ३म् स त्वन्नोऽअग्ने०-इदमग्नी-**

**वरुणाभ्याम्, न मम ॥५॥ ॐ अयाश्चाऽग्ने०—इदमग्नये अयसे, न मम ॥६॥ ॐ ये ते शतं०—इदं वरुणाय, न मम ॥७॥ ॐ उदुत्तमं०-इदं वरुणायाऽऽदित्य० न मम ॥८॥ ॐ प्रजापतये-स्वाहा, इदं प्रजापतये, न मम ॥९॥**

ततः संस्रवप्राशनम् ॥ पवित्राभ्यां मार्जनम् ॥ अग्नौ पवित्रप्रतिपत्तिः ॥ ब्रह्मणे पूर्णपात्रदानम् ॥ तत्र सङ्कल्पः—

**ॐ अद्येहेत्यादि० अमुकोहममुकराशेः पुत्रस्याऽन्नप्राशनाङ्गहोमकर्मणःसाद्गुण्यार्थं सम्पूर्णफलप्राप्त्यर्थञ्च सद्द्रव्यं पूर्णपात्रमिदं ब्रह्मन्! तुभ्यं सम्प्रददे ॥**

ततो ब्रह्मा पात्रं गृहीत्वा वदेत्—

**"द्यौस्त्वा ददातु, पृथिवी त्वा गृह्णातु"।**

ततोऽग्नेः पश्चिमतः प्रणीताविमोकः—

**ॐ आपः शिवाः शिवतमाःशान्ताः शान्ततमास्ते कृण्वन्तु भेषजम् ॥**

तत्र लग्नदानसंकल्पं कुर्यात्—

**ॐअद्येहेत्याद्युच्चार्याऽमुकोऽहममुकराशेः मम पुत्रस्याऽन्नप्राशनलग्नाद्यत्र-तत्रस्थान-स्थितानां सूर्य्यादिनवग्रहाणां, दुष्टानांदुष्टफलो-पशान्त्यर्थं, शुभानां शुभफलाधिक्यप्राप्तये, इदं सुवर्णमिमां दक्षिणाञ्चनानागोत्रेभ्यो ब्राह्मणेभ्यो विभज्य दास्ये ।। ॐतत्सदस्तु ।।**

ब्राह्मणेभ्या यथेष्ट-दक्षिणां दत्वा, सर्वांश्च रसान् सर्व-मन्नं मध्वाज्यसक्तुसहितमेकस्मिन्कांस्यपात्रे कृत्वा, सुवर्णा-न्तर्हितया मुद्रिकया मातुरुत्सङ्गे स्थितं बालकं स्वांके स्थितं वा, देवतापुरतोऽनामिकांगुष्ठाभ्यां ॐ हन्तेति-मन्त्रेण सकृत् । तूष्णीं पञ्चवारं प्राशयेत् ।।

**"हन्तकारं मनुष्याः"-इति श्रुतिवचनात् ।।**

ततो मत्स्यजलेन त्रिवारं मुखं शोधयेत् ।। ततो माता बालकं स्वांकाद्भूभावुपवेशयेत् । शिल्पानि विन्यस्य तस्य जीविकापरीक्षां कुर्यात् तत्पश्चात्तत्र स बालको वस्त्रशस्त्रलेख-नीपुस्तकादिवस्तुषु यत्प्रथम स्पृशति,तेन तस्य जीविका भवि-ष्यतीति ज्ञेयम् । ततो होमदक्षिणाकर्मसाङ्गदक्षिणासंकल्प-

**ॐ अद्येत्यादि० अमुकराशेः पुत्रस्याऽ-न्नप्राशनाङ्गहोमकर्मणस्तथाऽन्नप्राशमकर्मणः**

**साङ्गफलप्राप्त्यर्थं साद्गुण्यार्थे चेमां दक्षिणा-माचार्य्याय, तथाऽन्येभ्यो ब्राह्मणेभ्यश्च विभज्याहं दास्ये । तथेमां भूयसीदक्षिणां नानागोत्रेभ्यो ब्राह्मणेभ्यस्तथाऽन्येभ्यो नट-नर्तकगायकादिदीनाऽनाथेभ्यश्च विभज्यहं दास्ये । तथा-षड्रसव्यञ्जनै र्यथासंख्यकान् ब्राह्मणाँश्च यथाकाले भोजयिष्ये ॐ तत्स-दस्तु ॥ इतिसङ्कल्प्य, यथेष्टदक्षिणां दत्त्वा, रक्षाबन्धन-घृतच्छाया - ऽयायुष्करणाऽभि-षेक-तिलक-मन्त्रपाठादिकं कारयित्वा, महा-नीराजनञ्च कृत्वा, ब्राह्मणान्भोजयेत्, । स्वेष्टमित्रबन्धुसहितः स्वयमपि भोज्यं भुञ्जीत ॥ इत्यलम् ॥**

अन्न-प्राशन-संस्कार- यह संस्कार पुत्रों का सम-महीनों में तथा पुत्रियों का विषम-महीनों में होना शास्त्रविहित है। 'षष्ठे मास्यन्नमश्नीयात् [ व्याससमृति १।१८ ]' इस बच-नानुसार छठे-मास में बालकको अन्न-प्राशन करावे । बालक ने जो माता के गर्भ में मलीनता-भक्षण की है, उसकी शुद्धि के लिये यह संस्कार किया जाता है । अब तक जो मातृ-

स्तनोंसे दूध स्वरूप भोजनका आधार था अब आजसे अन्नका भी आधार मिलेगा और शारीरिक बल बढ़ेगा। अन्न कैसा बालक को देना चाहिए? इसके लिये गृह्य-सूत्रकार लिखते हैं कि-'घृतौदनं तेजस्कामः' तथा 'दधिघृतमधुमिक्षितमन्नं प्राशयेत्।' अर्थात् घी-भात वा दही घी, शहद से मिश्रित अन्न बालक को चटाना चाहिये। यदि बालक पुष्ट हो तो १ बार मन्त्र सहित, तथा पाँच बार मौन (तूष्णीं) होकर अन्नादि चटावे। यह भी किसी आचार्य का वचन है यथा-'पञ्च कृत्वस्तूणीं प्राशयेत्'। शास्त्रों का वचन है कि-यदि समय पर अन्न-प्राशन संस्कार न हो सके तो अन्य शुभमुहूर्त में भी किया जा सकता है ॥ इति अन्न-प्राशन संस्कार ॥

## ❀ अथ केशाऽधिवासनम् ❀

कृत्यमिदं चौल (मुण्डन) दिनात्पूर्वनिशायामेव विधेयम्। तत्राऽऽचार्य्यः मण्डपस्याग्नेय्यां गणपतिवेदीं निर्माय, तदुपरि रक्तवस्त्रञ्च प्रसार्य, रक्ताक्षतैरेष्टदलं पद्मं विरच्य, रक्त-सूत्रवेष्टितां मृण्मयीं गणपतिप्रतिमां स्थापयेत्। तत्रैवाऽक्षतै-र्द्वादशविनायक-षोडशमातृका-पञ्चोंकार देवतासहिताः सर्वाः देवताः संस्थापयेत्। मध्ये पुण्याहवाचनकलशस्थापनार्थं पद्म-मेकं विरच्य गणपतिवेद्याः पृष्ठभागे पट्टिकायां भित्तौ वा सप्तघृतमातृकाः संलेख्याः। ऐशान्याञ्च रक्तवस्त्रान्वितायां ग्रहवेद्यांसविधिनाक्षतपुञ्जैरधिदेवताप्रत्यधिदेवतापञ्चलोकपा-लसहिताः नवग्रहाश्चारोपणीयाः। तत्राऽग्निवेदिकाद्याः पश्-

चमे चोत्तरतश्चौलकर्माधिवासनोचितानि वस्तूनि संस्थापयेत् । तद्यथा–

मण्डपान्तरदेशे तु, विद्वद्वृन्दै सुशोभिते । कांस्यपात्रे पल्वलार्थं, रक्तवृषभगोमयम् ॥ १ ॥ दुग्धं मधुकञ्च त्रिशिरस्य, दधि वा सर्वसिद्धिदम् । नवनीतमयं पिण्डं,शुभ्रवस्त्रोपसंवृतम् ॥२॥ तत्र संस्थापयेद्धीमान् *शल्लकीकण्टकत्रयम् । अयःक्षुरं ताम्रपात्रे, सप्तविंशतिकान्कुशान् ॥ ३ ॥ पीतकौशेयवस्त्राणां, निर्मितं पञ्चपञ्चके । रोचना य वदूर्वाभि- × गौरि सर्षपकाऽक्षतैः ॥४॥ १राजिका २पूग ३मयूर पिच्छस्वर्णकराजतैः । पञ्चपोटलिकाः कृत्वा, रक्तसूत्रेण वेष्टयेत् ॥५॥ आम्रपल्लवताम्बूलपत्राणि कोमलानि च । रक्तसूत्रेषु बध्नीयात्, जूटिकार्थं यथाविधिः ॥ ६ ॥ पञ्चपोटलिकाः जूटाः, [illegible]योक्तविधानतः । मनोजूतीतिमन्त्रेण, प्रतिष्ठां चैव कारयेत् ॥७॥ पुनर्यजमानमाहूय, आचार्य्य-स्वस्तिपूर्वकम् । पूजनं सर्वदेवानां, कारयेच्च यथाविधिः ॥ ८ ॥

अलङ्कृतं माणवकं, सुस्नातञ्च सुवाससम् । सुवस्त्रालंकृतायास्तु, मातुरङ्के निवेशयेत् ॥९॥ पिता कुर्यादथाचार्य्यः, सङ्कल्पं प्राङ्मुखः शुचि-

**ॐअद्येत्यादि-देशकालौ संकीर्त्याऽमुकनामशर्म्माहं, वर्म्माहं, गुप्तोऽहं वा, अस्यां**

---

* सफेद-सेही के ३ कांटे । × सफेद सरसों । १ राई । २ सुपाड़ी । ३ मोरपंख ।

**सन्ध्यायामेतस्य-अमुकशर्मणः कुमारस्य बीजगर्भसमुद्भवदोष परिहारार्थं बलायुर्वर्चोमेधाभिवृद्धयर्थं श्रीपरमेश्वरप्रीत्यर्थं श्वः करिष्यमाणचूडाकर्मसंसिद्धयै चाद्यरात्रौ केशानामधिवासनं करिष्ये ॥**

इस प्रकार सङ्कल्प करके मण्डपस्थ समस्तदेवताओं का मन्त्रोपचारों द्वारा पूजन करें। पुनः पूर्व-निर्मित एवं प्रतिष्ठित ३ पोटलियाँ तथा ३ जूटिकाएँ लेकर केशों में यथा क्रमसे बाँधे। जैसे कि-प्रथम शिर के दाहिने भाग के केशों में एक पोटली और एक जूटिका, तथा शिर के पिछले भाग के केशों में एक पोटली और एक जूटिका, तदनन्तर शिर के बाँये-भाग के केशों में एक पोटली और एक जूटिका रक्षाबन्धन-मन्त्रों द्वारा अभिमन्त्रण करके मंगलघोष पूर्वक गीतगानों के साथ-साथ बालक के शिर में बाँधें। तदन्तर-

**ॐ यदिति-दीर्घतमा-ऋषिस्त्रिष्टुप्छन्द, इन्द्रो देवता, चूडाऽभिमन्त्रणे विनियोगः ॥**

**ॐ यदश्वाय व्वासऽ उपस्तृणन्त्यधीव्वासं या हिरण्यान्यस्मै। सन्दानमर्वन्तं पड्वीशं प्रिया देवेष्वायामयन्ति। (इति-मन्त्रः)**

विशेषतस्तत्र-आचाराद् द्वे पोटलिकेऽपरे गृहीत्वा तयो-

रेकां क्षुरे, एकां शलल्याञ्च बध्नीयात् ।। ततः-

**ॐ एतन्ते०-इति मन्त्रेण प्रतिष्ठाप्य ।।**

**ॐ भूर्भुवःस्वः, चौलकर्म्मणि शिर जूटिकाः सुप्रतिष्ठिता भवन्त्वितिवदेत् ।। ततो दक्षिणासङ्कल्पः- ॐ अद्येहामुकशर्माहममुकशर्मणोऽस्य कुमारस्य चौलकर्म्मसंसिद्ध्यै कृतस्यास्य केशाधिवासनकर्म्मणः साङ्गतासिद्ध्यै इमां यथेष्टदक्षिणां नानागोत्रेभ्यो ब्राह्मणेभ्यो विभज्य दातुमुत्सृजामि ।।**

**ॐ तत्सत्-**

इति दक्षिणां दत्वा,पोटलिकामुष्णीषादिना बद्ध्वा संवेशयेत् ।

## ❀ अथ चूडाकर्म्म विधिः ❀

**चूडाकर्म्म द्विजातीनां,सर्वेषामेव जन्मतः ।**
**प्रथमेऽब्दे तृतीयेवा,कर्तव्यं श्रुति चोदनात् ।१।**

अथवा कुलाचारानुसार चूड़ाकर्म्म उपनयन [जनेऊ] संस्कार के साथ-साथ भी शुभ-मुहुर्त में भी किया जाता है । ज्योतिषशास्त्रोक्त शुभ-मुहुर्त❀में पितामाता एवं कुमारशुद्धजल

---

❀ चौल [चूड़ा] करण मुहूर्त-चूडावर्षात्तृतीयात्प्रभवति विषमेऽष्टार्करिक्ताद्यषष्ठी, पर्वोनाहे विचैत्रोदयगनसमये ज्ञेन्दुशुक्रेज्यकानाम् । वारे लग्नांशयोश्चास्वभनिधनतनौ नैधने शुद्धियुक्ते, शाक्रोपेतैर्विमित्रैर्मृदुचरलघुभैरायपट् त्रिस्थपापैः ।।... इति मुहूर्तचिन्तामणी ।

को स्नान करके, नूतन वस्त्रालङ्कारों को धारण कर, स्त्रियों के मङ्गल-गीतों के साथ-साथ वादित्रादि पञ्चघोष-पूर्वक पश्चिम द्वार से बहिःशाला में प्रवेश करें। वहाँ प्रथम यजमान [पिता] पूर्वाभिमुख होकर गणपति-वेदी के पास आसन पर पूजन करने बैठे। यजमान से दक्षिण-भाग में बालक को गोद में पूर्वाभिमुख लेकर माता बैठे। वहाँ पूजा सामग्री इकट्ठी करके स्वास्ति वाचन पूर्वक गणेशादि पञ्चाङ्ग देवताओं का पूजन करें। तदनन्तर पिता जलाक्षतपुष्पादि दक्षिण हाथ में लेकर संकल्प करै-

**ॐ अद्येत्यादि-देशकालौ सङ्कीर्त्य, ममास्य पुत्रस्य बीजगर्भसमुद्भवैनोनिबर्हणपूर्वकबलायुर्वर्चोभिवृद्धिव्यव—हारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं चूडाकर्म करिष्ये तदङ्गतया त्रीन् ब्राह्मणानहं तृप्ति पूर्वकं भोजयिष्ये, तेभ्यो दक्षिणाञ्च दास्ये।**

इस प्रकार संकल्प-पूर्वक ३ ब्राह्मणों को भोजन कराके उन्हें दक्षिणा देवै। पुनः आचार्य एवं ब्रह्मा का संकल्प-पूर्वक पूर्वोक्त विधि द्वारा वरण करै। [ एषु कर्मसु ब्राह्मणानामाचार्यः पितैव भवति ॥ 'उपनीय ददद्वेदमाचार्यः स उदाहृतः' इति-याज्ञवल्क्यस्मरणात । पितुरसन्निधाने—पितृव्य भ्रात्रादीनामप्यधिकारः । तथा क्षत्रियादीनां वेदाध्यापना-

भावादन्यो ब्राह्मणोऽधिक्रियते )। फिर आचार्य चूडाकरण-वेदी में पञ्चभू संस्कार-पूर्वक सभ्य-नामक अग्नि स्थापित करें। प्रथम अग्नि-कोण से अग्नि लाकर पश्चिमाभिमुख स्थापित करें। + इस अवसर पर माता अपने बालक को गोदी में लेकर अग्नि के पीछे पतिके वाम-भाग में बैठे। तदनन्तर बालक का पिता कुशकण्डिका-विधि करें। ततः पिता ब्रह्मोपवेशनादि-पर्युक्षणान्तं कर्म समाप्य, तत्राऽऽसादनान्ते, विशेषवस्तूनि च स्थापयेत्॥ यथा शीतोष्णोदकमिश्रणार्थमेकं पात्रम्, शीतं जलम्, उष्णं जलम्,तक्रम्, नवनीतपिण्डम्, घृतपिण्डम्, दधिपिण्डम् गोधूम पिण्डंस्वा। त्र्येणीशल्लकीत्रिषु स्थानेषु श्वेतेत्यर्थः। सप्तविंशतिदर्भपिञ्जूल्यः पवित्रलक्षणाः ताश्च सौकर्याय तिस्रस्तिस्रः सूत्रवेष्टिताः क्रियन्ते। क्षुरस्ताम्रपरिष्कृतो लोहः, आनडुहं गोमयं' नापितश्चेति॥ ततः पवित्रच्छेदनादिपर्युक्षणान्तं कर्म कृत्वा [पूर्वांकित विधिनैव] होमद्रव्यत्यागं कुर्यात्॥ तत्रादौ हस्ते जलमादाय संकल्पं कुर्यात्

**ॐ अद्य पूर्वोच्चरित० ममास्य पुत्रस्य चूडाकर्म्मणा यक्ष्ये, तत्र-प्रजापतिमिन्द्रमग्निं सोममग्निं वायुं सूर्य्यं प्रजापतिं,तथाऽऽज्येन भूराद्या नवाहुतीनां मध्येऽग्निं वायुं**

---

+ कुशकण्डिकाभाष्ये—अग्न्यानयनपात्रे तु, प्रक्षिपेदक्षतोदकम्। यद्येवं नैव कुर्वीत, यजमानभयावहम्॥

सूर्य्यञ्चाग्नीवरुणौ, अग्निं वरुणं सवितारं विष्णुं विश्वान्देवान् मरुतः स्वर्कान् वरुणमादित्यान्, अदितिं प्रजापतिमग्निं स्विष्टकृतञ्चाऽहं यक्ष्ये ॥ [ घृतमिदं तत्तद्देवताभ्यो मया परित्यक्तं यथा दैवतमस्तु]ॐ एतन्त'-इत्यग्निं सु प्रतिष्ठाप्य ॥ ॐ भूर्भुवः स्वः, सभ्यनामाग्ने ! सुप्रतिष्ठितो वरदो भव॥ ॐ तदेवाऽग्निस्तदाऽऽदित्यस्तद्वायुस्तदु चन्द्रमाः । तदेव शुक्रन्तद्ब्रह्म ताऽआपः स प्प्रजापतिः ॥ ॐ चत्त्वारि श्शृङ्गा त्त्रयोऽअस्य पादाद्द्वे शीर्षे सप्प्तहस्त्ता सोऽअस्य । त्त्रिधा बद्धो व्वृषभो रोरवीति महो देवो मर्त्त्याँ २ ॥ ऽआविवेश ॥

इतिमन्त्रैर्ध्यानाऽऽवाहनपाद्यादिनीराजनान्तमग्निं संपूज्य, दक्षिणं जान्वाच्य कुशैर्ब्रह्मणान्वारब्धः, उपयमनकुशसहितं मनसा प्रजापतिं ध्यायन् जुहुयात्-

ॐ प्रजापतये स्वाहा—इदं प्रजापतये न मम ॥ (प्रोक्षण्यां संस्रवप्रक्षेपः) ॥ ॐइन्द्राय

---

यजमानेनाऽन्यस्य होमकर्तृत्वे त्यागं कार्यम्, स्वयं कर्तृत्वे तु न ।

स्वाहा—इदमिन्द्राय न मम ॥ ॐ अग्नये स्वाहा—इदमग्नये न मम ॥ ॐ सोमाय स्वाहा—इदं सोमाय न मम ॥

इत्याधाराऽऽज्यभागौ हुत्वा, भूरादित्रिव्याहृति-होमं कुर्यात ।

ॐ त्रिव्याहृतीनां प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुब्छन्दांसि, अग्निवायुसूर्य्या—देवताः, सर्वप्रायश्चित्तहोमे—विनियोगः ॥ ॐ भूः स्वाहा—इदमग्नये न मम ॥ ॐ भुवः स्वाहा—इदं वायवे न मम ॥ ॐ स्वः स्वाहा-इद ँ सूर्याय न मम ॥ ॐ त्वन्नोऽअग्ने-इति वामदेवऋषिस्त्रिष्टुप्छन्दः, अग्नीवरुणौ देवते, होमे—विनियोगः ॥ ॐ त्वन्नोऽअग्ने-व्वरुणस्य विद्वान्देवस्य हेडोऽ अवयासिसीष्ठाः । यजिष्ठो व्वह्निनतमः शोशुचानो विश्श्वाद् द्वेषा ँ सि प्रमुमुग्ध्यस्मत्-स्वाहा ॥ इदमग्नीवरुणाभ्यां न मम ॥ ॐ सत्वन्न—इति वामदेवऋषिस्त्रिष्टुप्छन्दः, अग्नीवरुणौ देवते, होमे—विनियोगः ॥ ॐ

स त्वन्नो ऽ अग्ग्ने वमो भवोतीनेदिष्ठ्ठो-ऽअस्या ऽ उषसो व्व्युट्ष्टौ ॥ अवयक्ष्व नो व्व-रुण ७ रराणो व्वीहि मृडीक ७ सुहवो न ऽए-धि—स्वाहा ॥ इदमग्नीवरुणाभ्यां न मम ॥
ॐ अयाश्चाग्ग्न—इति वामदेवऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवता, होमे—विनियोगः ॥
ॐ अयाश्चाग्ग्ने स्यनभिशस्तिपाश्च सत्य-मित्त्वमया ऽ असि । अयानो यज्ञं वहास्यया नो धेहि भेषज७-स्वाहा ॥ इदमग्नये, अयसे, न मम ॥ ॐ येते शतमिति-शुनः शेपऋ-षिस्त्रिष्टुप्छन्दो, वरुणसवितृविष्णुविश्वे-मरुतः स्वर्का-देवताः, होमे—विनियोगः ॥
ॐ ये ते शतं व्वरुण ये सहस्त्रं यज्ञियाः पाशा व्वितता महान्तः । ते भिर्न्नोऽअद्य सवितोत-व्विष्ण्णुर्व्विश्श्वे मुञ्चन्तु मरुतः स्वर्क्काः—स्वाहा । इदंवरुणाय, सवित्रे, विष्णवे, विश्वे-भ्यो देवेभ्यो, मरुद्भ्यः, स्वर्क्केभ्यश्च-न मम।
ॐ उदत्तममिति-शुनःशेपऋषिस्त्रिष्टुप्छन्दो

वरुणो देवो, होमे—विनियोगः ॥ ॐ उदुत्तमम्व्वरुण पाशमस्म्मदवाधमं व्विमद्ध्यमꣳ श्रथाय । अथाव्वयमादित्यव्रते तवानागसोऽअदितये स्याम—स्वाहा ॥ इदं वरुणायाऽऽदित्यायाऽदितये च न मम ॥ ॐ प्रजापतये-स्वाहा ॥ इति प्रजापतये, न मम । ॐ अग्नये स्विष्टकृते-स्वाहा, इदमग्नये स्विष्टकृते न मम ॥

ततः संस्रवप्राशनम् ॥ पवित्राभ्यां मार्जनम् ॥ अग्नौ च पवित्र प्रतिपत्तिः ॥ ब्रह्मणे पूर्णपात्रदानम् ॥

अद्येहामुकोऽहं अमुकराशेरमुकनाम्नः पुत्रस्य चूडाकर्माङ्गहोमकर्मणः साङ्गफलप्राप्तये, साद्गुण्यार्थञ्चेदं पूर्णपात्रं ससुवर्ण ब्रह्मणे तुभ्यमहं सम्प्रददे ॥ यजमानो वदेत-प्रतिगृह्यताम् ॥ 'ॐ प्रतिगृह्णामि'—

इति ब्रह्मा वदेत् ॥ ततः प्रणीताविमोकः ॥

ततः 'ॐसुमित्रियानऽआपऽओषधयस्सन्तु' ।

इति-पवित्राभ्यां प्रणीताजलेन शिरः संमृज्य ॥

ॐ दुर्म्मित्रियास्तस्म्मै सन्तु योऽस्मान्द्वेष्टि

यज्ञ वयन्द्विष्मः ॥

इत्यैशान्यां प्रणीता न्युब्जीकरणम् ॥ ततः परिस्तरणक्रमेण बर्हिरुत्थाप्य घृतेनाभिघार्य–

ॐ देवागातु विदो गातुम्वित्त्वा गातु मित । मनसस्पतऽ इमन्देव यज्ञ ७ स्वाहा व्वातेधाः-स्वाहा—इति बर्हिर्होमः ॥ ॐ अक्रन्कर्म्म कृतः सह व्वाचामयोभुवा । देवेभ्यंःॐ कर्म्मकृत्त्वास्त प्रेत सचाभुवः ।

इति-'मन्त्रपाठः' ॥ ततो दैवज्ञबोधिते शुभ मुहूर्ते सुलग्ने लग्नदानं कुर्यात् ॥ तत्र । संकल्पः-

अद्येहाऽमुकराशेरस्य कुमारस्य चूडाकर्मलग्नाद्यत्र कुत्र स्थानस्थितानांसूर्यादि–ग्रहाणां दुष्टानां दुष्टफलोपशान्तये, शुभानां विशेषतः शुभफलप्राप्तये, इदं सुवर्णं सुवर्णनिष्क्रयीभूतं द्रव्यं वा, दैवज्ञाय विप्राय दातुमहमुत्सृजे ॥ ॐ तत्सदिति ।

पुनः दैवज्ञ को दक्षिणा देकर सन्तुष्ट करे । तदन्तर नीचे लिखे मन्त्र द्वारा शीतल जलके पात्र में कुछ उष्ण-जल मिलावें ॥ तत्र मन्त्रः-

ॐ उष्णेन व्वाय इति-परमेष्ठी ऋषिः,

**प्रतिष्ठाछन्दो, लिङ्गोक्ता—देवता, उष्णोदकाऽऽसेचने-विनियोगः ।। ॐ उष्णेन वाय ऽउदकेनेह्यदिते केशान्वप ।।**

पुनः उस जल पात्र में कुछ मट्ठा, दही पिण्ड, नवनीत-पिण्ड तथा घृत-पिण्ड विनामंत्र बोलेही मिलावें। तदनन्तर पूर्वाभिमुख बैठे हुए बालक के शिर में [ दक्षिण, पश्चिम और उत्तर की ओर जो केशों में-तीन जूड़े पूर्व-रात्रि में बाँध रखे हैं, उनमें से ] प्रथम दक्षिण-जूड़ा के केशों को नीचे-लिखे मन्त्र द्वारा उस मट्ठा-आदि मिलाये हुए जल से तीन बार भली प्रकार भिगोवे । तत्र मन्त्रः-

**ॐ सवित्रेति मन्त्रस्य-प्रजापतिर्ऋषिर्गायत्रीछन्दः,आपो देवता, उन्दनेविनियोगः । ॐ सवित्रा ऽप्रसूता दैव्याऽआप ऽउन्दन्तु ते तनूम् । दीर्घायुत्वाय बलाय वर्च्चसे ।।**

तदनन्तर सफेदसेही के काँटेसे शिरकी दाहिनी ओर जूड़ा बँधे हुए केशोंके तीन-भाग करे । पुनः नीचे लिखे मन्त्र द्वारा उन एक एक भाग में तीन-तीन कुशायें अग्र-भाग सहित केशों में लगावें ।। तत्र मन्त्रः-

**ॐ ओषधे-इति मन्त्रस्य प्रजापतिर्ऋषिर्यजुश्छन्दः, ओषधीर्देवता, कुशतरुणान्तर्धाने विनियोगः ।। ॐ ओषधे त्रायस्व स्व-**

**धिते मैन ँ हि ँ सीः ॥**

पुनः सकुश तरुण केशों को बांये-हाथ मे पकड़कर, लिखे मन्त्र द्वारा दाहिने-हाथ में लोहे का छुरा लेवे ॥ तत्र-मन्त्रः—

**ॐ शिवो नामेति—प्रजापतिर्ऋषिर्यजुश्छन्दः, क्षुरो देवता, क्षुरग्रहणे विनियोगः ॥ ॐ शिवो नामासि स्वधितिस्ते पिता नमस्तेऽअस्तु मा मा हि ँ सीः ॥ इति ॥**

तदनन्तर नीचे-लिखे मन्त्र द्वारा बालों में छुरा लगावे ॥ तत्र-मन्त्रः—

**ॐ निवर्त्तयामीति—प्रजापतिर्ऋषिर्यजुश्छन्दः, क्षुरो देवता, प्रवपने-विनियोगः । ॐ निवर्त्तयाम्यायुषेऽन्नाद्याय प्रजननाय-रायस्पोषाय सुप्रजास्त्वाय सुवीर्य्याय ॥**

तदनन्तर नीचे-लिखे मन्त्र-द्वारा पिता बालक के दक्षिण केशों के तीन भागों में से प्रथम भाग को सावधानी से काटे ॥ तत्र-मन्त्रः—

**ॐ येनाव पदिति—औलम्बायनऋषिः, पङ्क्तिश्छन्दः, सविता देवता, केशच्छेदने-विनियोगः ॥ ॐ येनावपत्सविता क्षुरेण**

**सोमस्य राज्ञो व्वरुणस्य व्विद्वान्। तेन ते ब्ब्रह्माणो व्वपतेदमस्यायुष्यञ्जरदष्टिर्यथासत्**

पुनः उन तीनों कुशाओं सहित काटे हुए केशों को उत्तर दिशा में रक्खे हुए बैल के गोमय पिण्ड पर अथवा गेहूँ के गीले पिण्ड पर रखे × ॥ पुनः केशों के अवशिष्ट दाहिने दो भागों को जल से भिगोना। केशों में तीन-तीन कुशाएं रखना, आदि केश-छेदन पर्यन्त सभी कृत्य पूर्वोक्त प्रकार से मौन होकर बिना-मन्त्र पढ़े ही करे। [इस प्रकार बालक के दाहिनी ओर के केश कतरने से ६ कुशाएं, १ जूड़ा, १ पोटली भी शिर से पृथक हो गयी ॥ १ ॥

अथ पश्चिमगोदानेउन्दनं विनयन, कुशतरुणान्तर्धानञ्च पूर्वोक्तै रेव मन्त्रैः कुर्यात्। क्षुरस्तु मन्त्रेण गृहीतत्वान्न पुनर्मन्त्रसंस्कारमर्हति। द्रव्याभेदात् प्रवपनंक्षु रसंलग्नीकरञ्च पूर्वोक्तमन्त्रेणैव कुर्यात् ॥ पुनः केशच्छेदनेत्वत्र मन्त्रविशेषः-

**ॐ त्र्यायुषमिति-नारायण ऋषिरनुष्टुप्छन्दोऽग्निर्देवता, केशच्छेदने-विनियोगः। ॐ त्र्यायुषञ्जमदग्नेः कश्यपस्य त्र्यायुषम्।**

---

× लोकाचार-यहां पर बालक का पितामह [बाबा] अपनी गोदी में बालक को लेकर [पूर्वाभिमुख] होकर बैठता है। तथा बालक की बूआ उत्तर दिशा में हाथ में गोमय-पिण्ड लेकर बैठती है, और वह बालक के जूड़ले-बालों को पिण्ड में सावधानी से रखती जाती है।

**यद्देवेषु त्र्यायुषन्तन्नो ऽअस्तु त्र्यायुषम् ॥**

इति मन्त्रेण केशान् छित्वा, पूर्ववद् गोमयपिण्डे निदध्यात् ॥ एवं पुनर्वारद्वयम्, इतरयोः पश्चिमगोदानस्थ केशभागयोरुन्दनं, कुशातरुणान्तर्धानं, क्षुरादानं, प्रवपनं, केशच्छेदनं, गोमये स्थापनञ्च तूष्णीं कुर्यात् ॥२॥ अथोत्तरगोदानेउन्दनविनयनकुशतरुणाऽन्तर्धानक्षुरादानप्रवपनानि पूर्वप्रकारेणैव कुर्यात् ॥ पुनः केशच्छेदनेत्वत्र मन्त्रविशेषः-

**ॐ येनेतिप्रजापतिर्ऋषिर्यजुश्छन्दः, क्षुरो देवता, केशच्छेदने-विनियोगः ॥ ॐ येन भूरिश्चरादिर्वं ज्ज्योक् च पश्चाद्धि सूर्य्यम्। तेन ते वपामि ब्रह्मणाजीवातवे जीवनाय सुश्लोक्याय स्वस्तये ॥**

इतिमन्त्रेण केशान् छित्वा, पूर्ववद् गोमय-पिण्डे निदध्यात् ॥ एवं पुनर्वारद्वयम्, इतरयोरुत्तरगोदानस्थ केशभागयोरुन्दनं, कुशातरुणान्तर्धानं, क्षुरादानं, प्रवपनं, केशच्छेदनं, गोमयेस्थापनञ्च तूष्णीं कुर्यात- ॥३॥ अथ त्रिःक्षुरेण शिरः प्रदक्षिणं परिहरति, शिरसः समन्तात् प्रदक्षिणां परिभ्रामयतीत्यर्थः । सकृन्मन्त्रेण द्विस्तूष्णीम् ॥ तत्र-मन्त्रः-

**ॐ यत्क्षुरेणेतिवामदेवऋषिर्यजुश्छन्दः। क्षुरो देवता, क्षुरपरिहरणे विनियोगः ।,**

**ॐ यत्क्षुरेण मज्जयता सुपेशसा वप्त्रा वा वपति । केशाँश्छिन्धिशिरो माऽस्यायुः प्रमोषीः ॥**

इतिमन्त्रेणोष्णोदकशेषेण जलेन सर्वं शिर आर्द्रीकृत्य, मुण्डनार्थं पिता नापिताय क्षुरं प्रयच्छति ॥ तत्र-मन्त्रः—

**ॐ अक्षुण्वमिति-वामदेवऋषिर्यजुश्छन्दः, क्षुरो देवता, क्षुरप्रदाने-विनियोगः ॥ "ॐ अक्षुण्व परिवप"-इति। "परिवपामीति"-**

नापितो वदेत् ॥ अथ यथा कुलाचारं नापितः केशवपनं कारयेत् ॥ ततः केशयुक्तं गोमयपिण्डं पल्वले, गोष्ठे, ह्रदे, कान्ते वा निधापयेत् ॥ ततः सुस्नातं वस्त्रं कृतशिरसं पुष्पमालाभिरलङ्कृतं माणवकमाचार्य्यसमीपमानीयाऽग्नेः पश्चादेव स्थापयेत् ॥ अथ पिता स्वाचार्य्याय वरं ददाति, कुमारस्याचार्य्याऽभावात् ॥ तत्र संकल्पः—

**ॐ अद्येहेत्यादि, अमुकराशेरमुकनाम्नः पुत्रस्य चूडाकर्म्माङ्गहोमकर्म्मणश्चूडा(चौल) कर्म्मणश्च साङ्गफलप्राप्तये, साद्गुण्यार्थञ्चेदं सुवर्णमग्निदैवतमाचार्य्याय तुभ्यमहं सम्प्रददे ॥ ॐ तत्सन्न ममेति—**

संकल्पंदद्यात् ।। तत आचार्य्यः मन्त्राशीर्वादं दद्यात् ।। पुन ब्राह्मणभोजनम् ।। इति चूडा [चौल] कर्म-विधिः ।।

चूडाकर्म [मुण्डन-संस्कार]-बालक के शिर का मुण्डन [जडूला उतारना] इसलिये कराया जाता है कि–'सुश्रुत-संहिता' में-'पापोपशमन केशनखरोमापमार्जनम् । हर्षलाघवसौभाग्यकरमुत्साहवर्द्धनम् ।।' अर्थात् केश, नख एवं रोमों का कटाना, मल-रूप पाप-निवारक, चित्त को प्रसन्न रखने वाला, हल्कापन एवं कान्ति-उत्साह-वर्द्धक होता है। गर्भोत्पन्न बालक की त्वचा [चमड़ी] अति-कोमल होती है,इसी कारण उसके शिर के कमजोर-बाल उखड़ कर पृथ्वी पर इधर-उधर गिरते रहते हैं, मुण्डन के उपरान्त उगने वाले बाल दृढ़ होकर, फिर वे नहीं झड़ पाते । सौन्दर्यता में बालों का होना विशेष-महत्व रखता है । बालों ही से मानव-देह की सौन्दर्यता बढ़ती है, यदि ये क्रमशः गिरते रहेंगे, तो स्व-रूप-लावण्यता कैसे झलकेगी ? बालों से शिर में भारी-गर्मी बनी रहती है, इसके फलस्वरूप बालकों को अनेक-प्रकार के शिरोरोग [फोड़ा-फुन्सी] आदि-उत्पन्न होते रहते हैं । गर्मी के कारण ही नेत्रज्योति घट जाती है,तथा स्मरण-शक्ति एवं चैतन्यता का ह्रास होता है । गर्भ के अपवित्र-बालों से प्रायः बालकों को भूतप्रेत-जन्य बाधाओं का भी भय बना रहता है । जब तक सम्पूर्ण मुण्डन-संस्कार नहीं होता तब-तक उस गर्भजात-शिशु की पवित्रता भी धर्मशास्त्रों ने नहीं मानी है-इन्हीं कारणों से यह मुण्डन-संस्कार किया जाता

है। प्रथम सम्पूर्ण जड़ूले वालों को संस्कार सहित कटवाकर पुनः अन्य किसी शुभ-मुहूर्त में शिखा (चोटी) रखनी चाहिये। अथवा यज्ञोपवीत धारण करते समय (उपनयन-संस्कार में) शिखा रखने का विधान निर्विवाद शास्त्रसिद्ध है। ऋषियों ने यह संस्कार जन्म से तीसरे, पांचवे-वर्ष में करना इसलिये बताया है कि- बालक के शिर की त्वचा ( चमड़ी ) तीसरे वर्ष में दृढ़ हो जायगी, और वह उस्तरे की तीव्र-धार को सहन कर सकेगी। साथ-साथ मुण्डन-संस्कार कराने का और भी रहस्य है कि बालक के दांत जन्म से प्रायः छठे माह से निकलने लगते हैं, और वे तीसरे-वर्ष में पूर्णतया निकल आते हैं। दांतों के निकलने पर बालक को विभिन्न-भांति के शिरोरोग उत्पन्न होने लगते हैं, आयुर्वेद-शास्त्र में बताया है, यदि समय पर मुण्डन करा दिया जायगा, तो फिर बच्चे को शिरोरोग-आदि होने की कोई आशंका न रहेगी। इसी कारण संस्कार-पद्धतिकारों ने भी बालक के मुण्डन होते ही तरी के लिये शिर में दही-मक्खन आदि का लेप करना बताया हैं, कि-बालक के शिरकी गर्मी शान्तहो, और उसकी नेत्र-ज्योति बढ़े, एवं स्मरण शक्ति जागृत हो, तथा गर्मी के कारण आगे शिर में उत्पन्न होने वाले फोड़ा-फुन्सी आदि का कोई भय न रहे।

इस संस्कार को 'चूडा-करण' भी कहते हैं, इसका तात्पर्य यह है कि विना मुण्डन कराये शिर में शिखा बन

हो नहीं सकती ? इसी कारण उपनयन-संस्कार के अन्तर्गत जो मुण्डन कराने का विधान शास्त्रों में लिखा है, तब उस समय 'चूडा' अर्थात् शिखा के भाग को छोड़ कर सम्पूर्ण-शिर का मुण्डन करावे । इस तरह से शिखा-धारण हुई । 'जन्मना जायते शूद्रः, संस्काराद् द्विज उच्यते'-बचनानुसार जब तक बालक शिखा-सूत्र धारण नहीं करता, तब तक वह वेदाधिकारी एवं देव पूजाधिकारी [ स्नातक ] नहीं हो सकेगा । जिस प्रकार राजाकी उच्च-ध्वजा सर्वथा विजयता की द्योतक होती है, उसी प्रकार हमारे हिन्दु-धर्म-शास्त्रों में शिखा का रखना भी अपनी जाति का एक विशेष महत्व रखता है । क्योंकि शिखा-द्वारा ही जाति-कर्मो की सिद्धि एवं सनातनी धर्म-साधनाएँ सिद्ध होती हैं । समन्त्रक-शिखा रखने से शिशु का बल, आयु एवं तेज बढ़ता है और जठ-राग्नि-दीपन होती है । यदि-'खल्वाटत्वादि दोषेण, विशि-खश्चेन्नरो भवेत् । कौशीं तथा धारयेत, ब्रह्मग्रन्थियुतां शिखाम् । '-प्राचीन-काल में सभी व्यक्ति अपनी लम्बी-लम्बी जटाएँ रखते थे, उस प्रथा के विलीन होजाने पर आज हम केवल शिखा ही रखते हैं । निराकरणकारी-तेज प्रवा-हित न हो सके, इसलिये शिखा में ग्रन्थिबन्धन करना भी आवश्यक होता है ।

मुण्डन [चौल संस्कार] का मुहूर्तः-'चूडाकर्म कुलोचि-

तम्' [व्यास स्मृतिः १।१८] । प्रथम, तृतीय अथवा पञ्चम वर्ष में अपने कुलधर्म्मानुसार किसी शुभ-मुहूर्त में मुण्डन-संस्कार किया जा सकता है । यथा-जन्म से विषम-वर्ष में उत्तरायण-सूर्य्य में, चैत्र-रहित अन्य-मासों में चन्द्रतारानुकूल-अश्विनी, मृग०, पुनर्वसु, पुष्य, हस्त, चित्रा, स्वाती, अभिजित्, श्रवण, धनिष्ठा, शतभिषा, उक्त-नक्षत्रों में, चन्द्र बुध-गुरु-शुक्रवारों में, भद्रादि-दोष रहित दिन में, २-३-५-७-१०-११-१३-तिथियों में, एवं शुभ-लग्न में करना चाहिये । तथा च-'सूनोर्मातरि गर्भिण्यां, चूडाकर्म्म न कारयेत् । पञ्चमाब्दात्प्रागूर्ध्वन्तु गर्भिण्यामपि कारयेत् ॥ सहोपनीत्या कुर्य्याच्चेत्तदा दोषो न विद्यते ॥१॥" अन्यच्च-विवाहव्रतचूडासु, यदि माता रजस्वला । तस्याः शुद्धेः परं कार्यं मङ्गलं मनुरब्रवीत् ॥ अर्थात् चूडाकर्म, यज्ञोपवीत एवं विवाह-आदि संस्कारों में यदि कदाचित् माता रजस्वला हो जाय ? तो शुद्धि के अनन्तर संस्कार करे, वह मंगलप्रद होता है । यदि आगे कोई शुभ-मुहूर्त न बनता हो तो, ऐसी स्थिति में [सूतकावस्था में] भी सविधि कूष्माण्डी-ऋचाओं द्वारा घृत-होम करके एवं गोदान-आदि करके संस्कार करना धर्मसिन्धु एवं निर्णयसिन्धु का मत है । चूडाकरण संस्कार तक कन्याओं के संस्कार स्मार्त एवं नाम-मन्त्रों द्वारा करे, और उसमें केवल होम वेद-मन्त्रों द्वारा करे । किन्तु कर्मका लोप कदापि नहीं करना चाहिए ॥ इति चूडाकर्म्म-विधिः ॥

## ❀ अथ कर्णवेध विधिः ❀

तत्र-तृतीये पञ्चमे वा विषमवत्सरे, सन्नक्षत्रे, पूर्वाह्णे, पिता प्राङ्मुख उपविष्टः स्वस्तिवाचनपूर्वकं गणपत्यादिपञ्चाङ्गदेवपूजां विधाय, त्रीन् ब्राह्मणान् भोजयित्वा संकल्पं कुर्यात्–

**ॐअद्येत्यादि० अमुक गोत्रोत्पन्नोऽमुक नाम शर्माऽहं, ममास्य पुत्रस्य बीजगर्भोद्भव सर्व पातकविनाशनार्थं सुखसौभाग्यादि-प्राप्तिहेतवे कर्णवेधसंस्कारञ्च करिष्ये ॥**

ततः-कुमारस्य मुखे मिष्टान्नं दत्त्वा, स्वर्णकारद्वारा मध्यं वीक्ष्य स्वर्णसूच्या दक्षिणकर्णं वेधयेत्–

**ॐ भद्रङ् कर्णेभिरिति-प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दो, लिङ्गोक्ता-देवता, दक्षिण-कर्णाऽभिमन्त्रणे-विनियोगः ॥ ॐ भद्रङ्क-र्णेभिः शृणुयाम देवा भद्रम्पश्येमाक्षभिर्य्य-जत्राः । स्थिरैरङ्गैस्तुष्टुवा ᳪ सस्तनूभि-र्व्यशेमहि देवहितँ यदायुः ॥१॥ ततो वामकर्णं वेधयेत्–ॐ वक्ष्यन्ती–मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दो, लिंगोक्ता-**

**देवता, वामकर्णाऽभिमन्त्रणे-विनियोगः ॥**
**ॐ वक्ष्यन्ती व्वेदा गनीगन्ति कर्ण्णम्प्रिय ᳪ सखायं परिषस्वजाना । योषेव शिङ्क्ते वितताधि धन्वञ्ज्या इय ᳪ समनेपारयन्ती। २।**

पुनः स्वर्णकारं सन्तोष्य,ब्राह्मणभोजनं भूयसींदक्षिणाञ्च दत्वा, देव-विसर्जनं कुर्यात् ।।इति।।

कर्णवेध-संस्कार-'कृतचूडस्य बालस्य, कर्णवेधो विधीयते' -[व्यास स्मृतौ १।१८]-वचनाऽनुसार, चूडा संस्कार होने के अनन्तर कर्णवेध संस्कार किया जाता है। कई-आचार्यों ने षोडश-संस्कार मे कर्ण-वेधको नहीं माना है, वे इसे पृथक् मानते हैं। किन्तुव्यास 'स्मृति' ने इसकी उपयोगिता समझ कर संस्कारों में इसे मान्यता दी है। बालकों के कर्ण-वेधन कराने का रहस्य आयुर्वेद-मतानुसार यह है कि-बालकों के कर्णवेधन करने से नसें ठीक रहती हैं, आतें और अण्डकोश की वृद्धि नहीं होने पाती तथा उनका नपुंसकत्व नष्ट होता है। मल-मूत्र त्यागन करते समय जो कानों में जनेऊ लपेटा जाता है, उसका भी यही कारण है। कन्याओं के कर्णवेधन करने से उनका भविष्य में वन्ध्यात्व [बांझपन] मिट जाता है। कारण किकर्णेन्द्रिय का सम्बन्ध मूत्रेन्द्रिय से सम्मिश्रित है। सुश्रुत संहिता के चिकित्सा-स्थान में लिखा है, कि—

'शंखोपरि च कर्णान्ते, त्यक्त्वा यत्नेन सेवनीम् ।

अत्ययासाद् वा शिरां विध्येदन्त्रवृद्धिनिवृत्तये' [१९।२१] अर्थात् गले के ऊपर कानों तक सविन-स्थान को त्यागकर आँतों की वृद्धि निवृत्ति के लिये शिरा अर्थात् नस का छेदन करे। सुश्रुत संहिता के सूत्रस्थान में इस प्रकार से है कि 'रक्षाभूषणनिमित्तं बालस्य कर्णौ विध्येते। धात्र्यंके कुमारमुपवेश्य कर्णं विध्येत ॥ पूर्वं दक्षिणकर्णं कुमारस्य, वामं कुमार्याश्चेति''। [१६।३] अर्थात् रक्षा एवं आभूषणों के निमित्त बालकों को माता की गोदी में बिठाकर बालकों का कर्णछेदन करे। वस प्रकार से कि बालकों का पहिले दाहिना कान, और कन्याओं का पहिले बाँया कानछेदे पुन: दूसरे कान छेदने चाहिये। कानों में स्वर्ण कुण्डल, मुरकी, वाली आदि धारण करने का तात्पर्य यह है कि इससे अण्डकोश में पानी नहीं उतरता, देह-रक्षा होती है एवं कीटाणुओं के संक्रमण प्राय: नष्ट हो जाते। साथ-साथ अङ्ग में छिद्र हो जाने से पैशाचिक तथा राक्षसी बाधाएं भी नष्ट होती हैं! उक्तञ्च 'नैनं रक्षांसि न पिशाचा सहन्ते, यो बिभर्ति दाक्षायणं हिरण्यम्' [शौ० अथर्व० सं० १।३५।२], तथा- जरा मृत्युर्यो बिभर्ति' [अथर्व० सं० १९।२६।१] ॥ विशेष-ब्राह्मण बालकों का कर्णछेदन चाँदी की सुई से, क्षत्रियों का सोने की सुई से, वैश्यों का चाँदी की सुई से, तथा शूद्रादिकों का कर्णछेदन लोहे की सुई द्वारा करना चाहिये। 'जातकर्म समारभ्य, स्त्रीणां चूडान्तमवंश:। होम:

समन्त्रकः कार्य्यः संस्कारस्तु ह्यमन्त्रकः' ।

ब्राह्मणों की पुत्रियों का 'विवाह-संस्कार' सर्वथा वेद-मन्त्रों द्वारा ही करना शास्त्र-सम्मत है—

अथ कर्णवेध-मुहूर्तः—

कन्यायाः कर्णवेधः स्यात्, सद्वारे विषमेऽब्दके ।
आद्ययामे सिते-पक्षे मैत्रक्षिप्रोत्तराचरे ॥

जन्मकालसे ६,७,८ महीनों में, विषम-वर्ष में, चैत्र-पौष तथा जन्म-मास त्यागकर अन्य-मासों में हरिशयन और रिक्ता तथा अमावस्या त्यागकर अन्य [ १।२।३,५।६।७ ८।१०।११।१२।१३।१५ ] तिथियों में शुक्ल-पक्ष में तथा कृष्णपक्ष की १० दशमी तिथि-पर्यन्त कर्णवेध करना शुभ होता है । भद्रारहित, चन्द्र, बुध, गुरु तथा शुक्र वारों में तथा पुन० अश्विनी, हस्त, पुष्य, अभि० मृग० चित्रा, अनु० रेवती, श्रवण, धनिष्ठा, शत०-इन नक्षत्रों में, तथा मेष, सिंह, वृश्चिक, मकर तथा कुंभ-लग्नों को त्याग कर अन्य-लग्नों में लग्न-शुद्धि द्वारा कर्ण-वेधन करना शुभ है ।

## अथाऽक्षरस्वीकार विद्यारम्भविधिश्च

"पञ्चमे सप्तमे वाब्दे, पूर्वं स्यान्मौञ्जिबन्धनात् ॥ तत्रैवाक्षरारम्भः कर्त्तव्यस्तु शुभे दिने ॥१॥" सम्पूजयेद् गणाधीशं, तथैव च सरस्वतीम् । कुलदेवीं ततश्चैव, पूजयेच्च बृहस्पतिम् ॥२॥ नारायणं महालक्ष्मीं, गन्धधूपादिभिस्तथा । स्वविद्यासूत्रकारांश्च, स्वविद्यां च विशेषतः ॥३॥ इत्थं

पञ्चमवर्षे, विहितपञ्चांगशुभदिने, शिशुना सहितः पिता मंगलद्रव्यैः स्नात्वाऽहते वाससी परिधाय, ललाटे कृततिलकः, शुभासने प्राङ्मुखश्चो पविश्याचम्य प्राणायामं कृत्वा, गंगोदकं पीत्वा, ॐ सुमुख श्चेत्यादि० पाठं पठेत् ॥

पुनः आचार्य देवताओं के स्थापन एवं पूजन के लिए मण्डप के पूर्व भागमें एक चौकी पर सफेद-वस्त्र बिछावे। उसके ऊपर रक्त-चावलों का एक अष्टदल-कमल बनावे। उस पर वे गणपति-स्थापन करे ॥ उसके नीचे अन्य देवताओं के स्थापन के लिए दध्यक्षत-पुञ्जों की पंक्तियाँ लगावे। प्रथम पंक्ति में यथाक्रम-विष्णु, लक्ष्मी, सरस्वती तथा कुल-देवताओं को स्थापित करे ॥१॥ इसी प्रकार द्वितीय-पंक्ति में-ब्रह्मा, आचार्य, गुरु नारद, व्यास, मनु, पाणिनी, कात्यायन, पतञ्जलि, सांख्याचार्य, पारस्कार, यास्क, कपिञ्जल, गोभिल, जैमिनी, पिंगल, गर्ग-इनको स्थापित करे ॥२॥ तृतीय-पंक्ति में गौतम, भरद्वाज, विश्वामित्र, कश्यप, जमदग्नि,वसिष्ठ अत्रि तथा कणादादि ऋषियों, को स्थापित करे ॥३॥ चतुर्थ-पंक्ति में-वेद, पुराण, न्याय, मीमांसा, धर्म्मशास्त्र शिक्षाशास्त्र, कल्प व्याकरण, निरुक्त, छन्द, ज्योतिष-शास्त्रों को स्थापित करे ॥४॥ तथा पञ्चम पंक्ति में वैशेषिक, वेदान्त, सांख्य, पातञ्जल, काव्य, अलंकार प्रभृति-शास्त्रों को स्थापित करे ॥५॥ पुनः 'ॐ मनो जूति०' तथा 'ॐ एतन्ते०' आदि वेद-मन्त्रों द्वारासबों की

यथाविधि प्रतिष्ठा करे । पुनः नाम-मन्त्रोंसे उनका यथोपचार पूजन करे । तत्राऽऽदौ हस्ते जलमादाय संकल्प कुर्यात् । देशकालौ संकीर्त्य–

**ॐ अद्याऽमुकगोत्रः (अमुकनाम) शर्म्मा-ऽहं, (अमुक) राशेरस्य मम बालकस्य निखिलविद्याविशारदत्वासिद्धिद्वारा श्री महासरस्वती प्रीत्यर्थमक्षरारम्भं विद्यारम्भञ्च करिष्ये। तत्पूर्वाङ्गत्वेन दध्यक्षतपुञ्जेषु निर्विघ्नफलसिद्धिकामो गणेशविष्णु लक्ष्मी सरस्वतीकुलदेवतादीनां, वेदादिप्रवर्तकानां, ब्रह्मादीनामाचार्य्याणां वेदादिविद्यानाञ्चा-ऽऽवाहनपूर्वकं पूजनं करिष्ये ॥ इति-सङ्कल्प्य शान्तिपाठंस्वस्तिवाचनञ्च कृत्वा अष्टदल कमले-ॐगणानान्त्वेति-मन्त्रेण० गणपतिम्, ॐ भूर्भुवः स्वः, गणेश ! इहागच्छ, पूजार्थं त्वामावाहयामि, स्थापयामि इहागच्छ, इह-तिष्ठ ॥१॥ ततः । ॐ इदं विष्णुरिति-मन्त्रेण विष्णुम् ॥२॥ ॐश्रीश्चते०**

इति मन्त्रेण लक्ष्मीम् ॥३॥ ॐ सरस्वती योन्न्यामितिमन्त्रेण सरस्वतीम् ॥४॥ ॐ अम्बेऽ अम्बिके०-इति मन्त्रेण कुलदेवतामावाह्य ॥५॥ ॐभूर्भुवःस्वः, विष्णो ! लक्ष्मि! सरस्वति ! कुलदेवते ! यूयमिहागच्छत, पूजार्थं युष्मानावाहयामि, स्थापयामि। इह-तिष्ठत ॥

अथ द्वितीय पंक्तौ पुनरपीत्थम् ॥

ॐभूर्भुवःस्वः, ब्रह्मन् ! आचार्य ! गुरो ! नारद ! व्यास ! मनो ! पाणिने ! कात्यायन ! पतञ्जले ! सांख्याचार्य्य ! पारस्कर ! यास्क ! कपिञ्जल ! गोभिल ! जैमिनि ! पिङ्गल ! गर्ग ! यूयमिहागच्छत पूजार्थं युष्मानावाहयामि, स्थापयामि इह-तिष्ठत ॥

अथ तृतीय- पंक्तौ ॥ पूर्वोक्तरीत्या सप्तर्षय आवाहनीयाः

ॐ भूर्भुवः स्वः, गौतम ! भरद्वाज ! विश्वामित्र ! कश्यप ! जमदग्नि! वसिष्ठ ! अत्रि ! कणाद ! यूयमिहागच्छत, पूजार्थं

युष्मानावाहयामि, स्थापयामि, इहतिष्ठत ।
चतुर्थ-पङ्क्तौ ॥ ॐ भूर्भुवः स्वः, वेदाः ! पुराणानि ! न्याय ! मीमांसे ! धर्मशास्त्र ! शिक्षे ! कल्प ! व्याकरण ! निरुक्तं, छन्दांसि ! ज्यौतिष ! युयमिहागच्छत पूजार्थं युष्मानावाहयामि, स्थापयामि इह-तिष्ठत ॥

ततः पञ्चमपङ्क्तौ ॥ निम्नलिखितशास्त्राणां पूजनं प्रतिष्ठाञ्च कुर्यात् ॥

ॐ भूर्भुवः स्वः, वैशेषिक, वेदान्त, साङ्ख्य, पातञ्जल, काव्य, अलङ्कारप्रभृतयो यूयमिहागच्छत पूजार्थं युष्मानावाहयामि-इह तिष्ठत ॥ ततः ॐ एतन्ते ''इति-प्रतिष्ठाप्य । ॐभूर्भुवः स्वः गणेशाद्यलङ्कारप्रभृतिपर्यन्ता देवताः सुप्रतिष्ठिता वरदा भवन्तु ।

ततो भूमिं विलिप्य, तत्र मृन्मयवेदिकाञ्च निर्माय तदुपरि सरस्वीतयन्त्रं लिखेत् । सरस्वतीमावाहयेच्च-

ॐ भूर्भुवः स्वः, सरस्वति ! सर्ववाङ्मयरूपे ! इहागच्छ, इहतिष्ठ । पूजार्थं त्वा-

मावाहयामि, त्वमस्यां मृन्मयमूर्तौ सुप्रतिष्ठिता वरदा भव ॥

इत्थं यथामिलितोपचारैः नाममन्त्रेण वा सम्पूजयेत् ॥

ततः प्रार्थना–

ॐ सर्वविद्ये त्वमाधारा, स्मृतिज्ञानप्रदायिनि । प्रसन्ना वरदा भूत्वा, देहि विद्यां स्मृतिं यशः । इति । अनया पूजयाऽऽवाहितदेवताः प्रीयन्ताम् ॥ ततो गुरुवरणम्-ॐ गुरवे नमः । पाद्यादीनि समर्पयामि । इति-सम्पूज्य-ॐ वरणद्रव्याय नमः

ततः संकल्पं कुर्यात्–

ॐ अद्येहेत्यादि० अमुकोऽहं वाङ्मालिन्यादिसमस्तदोषपरिहारार्थं सद्बुद्धि–विद्यालब्धयेऽक्षरस्वीकारविद्यारम्भकर्मणोः कर्म कर्त्तुमनेन वरणद्रव्येणाऽग्न्यादिदैवतेनाऽमुकगोत्रममुकशर्माणं ब्राह्मणं गुरुत्वेन त्वां वृणे ॥ 'वृतोऽस्मीति'–प्रतिवचनम् ॥ ततः गुरुवन्दनम्–ॐ गुरुर्ब्रह्मा गुरुर्विष्णुः,

**गुरुर्देवो महेश्वरः। गुरुः साक्षात्परब्रह्म, तस्मै श्रीगुरवे नमः ॥१॥ ॐ अज्ञानतिमिरान्धस्य, ज्ञानाञ्जनशलाकया। चक्षुरुन्मीलितं येन, तस्मै श्रीगुरवे नमः ॥२॥**

इति गुरुं नमस्कृत्य, अध्यापकगुरोः समीपे प्रत्यङ् मुखमुपविश्य, पुष्पं गृहीत्वाति-

**ॐ सरस्वति महाभागे, वरदे कामरूपिणि। विश्ववन्द्ये विशालाक्षि, विद्यां देहि नमोऽस्तु ते ॥**

इति सम्प्रार्थ्य पट्टिकायां मंगलार्थं कुङ्कुमादिलेपनं कृत्वा, तदुपरि सुवर्णशलाकया

**स्वस्तिक लिखित्वा-श्रीगणेशाय नमः। ॐ सरस्वत्यै नमः। श्रीकुलदेवतायै नमः। श्रीगुरुभ्यो नमः। श्रीलक्ष्मीनारायणाभ्यां नमः। ॐ नमः सिद्धम् ॥**

इति-लिखित्वा लेखनक्रमेण गुरुः बालकं पाठयित्वा विद्यारम्भं कारयेत् ॥ ततः षोडशोपचारैः सरस्वतीं पूजयेत् ॥

*ततो ब्राह्मणभोजनं कृत्वा, सर्वेभ्यो यथेष्टदक्षिणां दद्यात।

* अपनी-शाखा में कहे विधान से आज्य-भाग पर्यन्त होम करके पूर्वोक्त गणेशादि-देवों के नाम से घी का हवन करना सिद्धि-प्रद होता है

## ❀ उपनयननिमित्तकक्षौरनिर्णय ❀

चौलकर्मणि-बौधायनापस्तम्बाश्वलायनपारस्करप्रभृति-महर्षिभिः-'अथैनमेकशिखस्त्रिशिखः पञ्चशिखो वा यथैवैषां कुलधर्मः स्यात्। यथर्षिशिखां निदधासीत्येके [बौ०गृ०२। ४। १७। १८] यथर्षि शिखां निदधाति यथैवैषां कुलधर्मः स्यात् [आप० १५। १६] यथामङ्गलं केशशेषकरणम् [पा० गृ० २। १। २१] इत्यादि स्वस्वनिर्मितसूत्रेषु, तथा-

'केशशेषं ततः कुर्याद् यस्मिन् गोत्रे यथोचित'-मित्यादि-स्मृतिवचःस्वपि माणवकस्यार्षसंख्यया कुलसमाचारतः शिखाधारणस्यावश्यकत्वं प्रतिपादितमिति नात्रविषये कस्याऽपि कोऽपि विरोधः समुदेति। तत ऊर्ध्वमुपनेयमाणवकानामुपनयन-संस्कारे किमेतां चूडाकर्मणि धृतां शिखां परित्यज्य वपनेन भाव्य शिखासहितेन वेति विवेचनेऽधस्तनानि प्रमाणान्युपलभ्यन्ते। तथाहि-

कुमारं भोजयित्वा तस्य चौलवत्तूष्णीं केशानुप्य शुचिवाससं बद्धशिखं यज्ञोपवीतिनं वाचयति [२। ४।७] इति बौधायनसूत्रे चौलवदिति पदेन चौलधर्मस्यातिदेशात्, बद्धशिखमितिपदस्य कुमारविशेषणत्वाच्च शिखावर्जमेवोपनयने वपनमभिहितम्। सशिखकृतक्षौरे तु बद्धशिखमिति विशेषणं व्यर्थमेवेति विदन्त्येव शास्त्रतत्त्वविदो विद्वांसः। आपस्तम्बसूत्रेऽपि-'प्रतिदिशं वपति'-इति प्रतिदिशवपनस्यैव विधिः समुल्लसति न तु सर्ववपनस्य। एतन्मतानुकूल्येनैव-'पर्युप्तशिरसम-

संकृतमानयन्ति'-[पा० गृ० २।२४] इत्यदाऽपि-शिखां वर्जयित्वा परित उप्तं शिरो यस्य स पर्युप्तशिरास्तमित्यर्थकसूत्रे प्रतिदिशं वपनमेवाऽभिप्रेतम्। संस्कारकौस्तुभेऽपि श्रीमदनन्तभट्टेन-चौलकर्मणि घृतशिखानां मध्ये मध्यशिखां वर्जयित्वाऽन्यासां वपनमुपनयने निरणायि न तु मध्यशिखायाः। इतरशिखानां धारणन्त्वनुपनीतानामेव नतूपनीतानामित्यपि तत्रैव माधवोक्तिमनुसृत्योक्तम्। कमलाकरभट्टोऽपि 'रिक्तो वा एष यन्मुण्डस्तस्यैतदपिधानं यच्छिखा' इति श्रुतेर्मध्यशिखां वर्जयित्वोपनयने तासां वपनं निरणैषीत्। कात्यायनश्रौतसूत्रेऽपि केशश्मश्रुवपने वाऽशिखमित्युदीरितम्।

महामहोपाध्यायसाम्नाढ्यश्रीमित्रमिश्रेण तु वीरमित्रोदये प्रमादाच्छिखावपने दक्षिणकर्णोपरि ब्रह्मग्रन्थिसमन्वितकुशनिर्मितशिखाधारणमभिहितम्, तां विना कर्मण्यधिकारिताया एवाऽसिद्धेः। खल्वाटत्वेन सर्वथा केशाऽभावे खल्वाटेनाप्येवमेव शिखाधारणं कार्यमित्युक्तं काठकगृह्ये।

"सदोपवीतिनाभाव्यं　सदा बद्धशिखेन च।
विशिखो व्युपवीतश्च यत्करोति न तत्कृतम्"॥

इति कात्यायनवचनादुपवीतित्वस्य बद्धशिखत्वस्य च क्रतुपुरुषार्थोभयत्वमवगम्यते। अत्रोपवीतित्वं बद्धशिखत्वञ्चाधिकारिविशेषणम्, तेनोपवीतं शिखां च विना कर्मकरणेऽधिकारितैव नोपपद्यतेऽतो विशिखेन व्युपवीतिना च कर्मणि क्रियमाणे कर्मणोऽपि वैगुण्यं भवति। एवं सति क्रतुपुरुषोभयाप-

चारप्रयुक्तं प्रायश्चित्तद्वयम् ।

'सशिखकृतक्षौर' मित्यत्र तु सशिखशब्दस्य क्षौरविशेषणत्वात् सशिखं कृतं क्षौरं येन यस्य वा स तमिति त्रिपदबहुव्रीहौ कृतेऽन्यपरतः- कृतं क्षौरं येन स कृतक्षौरः सशिखश्चासौ कृतक्षौरस्तमित्येवं सशिखशब्दस्य कुमारविशेषणत्वात् कर्मधारयस्यापि सर्वथा संभवान्नेदं समस्तं पदमेकान्ततः सामगमाणवकोचितशिखासहितक्षौररूपमर्थमभिधत्तेऽपि तु तत्तद्यजुर्वेदीयादिपद्धतिषूल्लिखितोऽप्ययं पाठः स्वस्वगृह्योक्तमतस्याश्रयणीयत्वेन स्वस्वाऽनुकूलार्थतया तत्तन्समासद्वयस्य सुवचत्वादर्थद्वयमेव प्रत्याययति । अन्यथा तत्तद्वचनानां वैयर्थ्यापत्तिरिति संक्षेपः ।

सामगमाणवकानान्तु यज्ञोपवीतसंस्कारे सशिखमेव क्षौरं प्रोक्तम् । केशश्मश्रुरोमनखानि वापयीत शिखावर्जम् [गो० गृ० ३ । ४ । २४] इति-गोभिलगृह्ये समावर्तने शिखारहितवपनस्योपदेशाद् ततः प्राक् सशिखमेव वपनं स्पष्टतया प्रतिपाद्यते । सशिखं वपनं कार्यमास्नानाद् ब्रह्मचारिणाम्, इति-कर्मप्रदीपे सामगानुद्दिश्यैव कात्यायनस्योक्तेश्च । परन्त्वास्नानादित्यत्र तेन [समावर्तनेन] विनारूपायां मर्यादायामाङ्सत्वेन, गोभिलगृह्ये शिखावर्जमिति पदोपादानेन च स्नानात्पूर्वमेव केशवापने कतिपयदिनविवृद्धमध्यकेशानां शिखारूपत्वेनावश्यधार्यत्वं प्रतिपाद्यतेऽन्यथा शिखावर्जमिति पदस्यासांगत्यापत्तिः स्पष्टैव । समावर्तनावन्तरन्तु शिखा-

धारणं तन्मुहूर्त पृच्छा च सर्वथाऽयुक्तैव ज्योतिषमुहूर्त ग्रन्थेषु क्वकापि तन् मुहूर्तोल्लेखाऽभावादिति । इदं च सर्वं सर्वेषांद्वाद-शवार्षिकादिव्रतान्ते समावर्त्तनपक्षे । उपनयनदिन एव समा-वर्त्तनाऽनुष्ठाने तु केशमुण्डनस्य पूर्वं जातत्वेन श्मश्रूणामनु-द्गमेन केवलं नखकर्तनमात्र समावर्तने कार्यमित्येकः पक्षो रामाण्डारादिसंमतः । प्रयोजनाऽभावेऽपि, स्पर्शसंस्कारमात्रं क्षुरेण कार्यमिति द्वितीयः पक्षो वृद्धजनसंमत उपेन्द्रादिसंमत श्चेति । सामगानान्तु पूर्वं शिखामुण्डनाच्छिरसि केवलशिखा-स्थानमेव कल्पनीयम्,तद्वर्जयित्वाऽन्यत्रशिरसि सर्वदिक्षु क्षुरेण स्पर्शमात्रंविधेयम्, इदं शिखास्थानकल्पनमेव तद्धारणमुहूर्तम् मन्तव्यम् नत्वितोऽन्यत् । ततोऽग्रे शनैः२ केशेषु स्वतः संवृद्धेषु सत्सुमध्यकेशानां संरक्षणेनान्यसर्वदिकस्थितकेशानां कर्त्तनेन च शिखारूपत्वं सुसंपन्नमेव । वाजसनेयिनां तु शिखा प्रथमतः सुरक्षितत्वैवातस्तैर्नखकर्त्तनमात्रं क्षुरेण शिरसः स्पर्शसंस्कार-मात्रं च कर्तव्यमिति ।

यत्र वाणाः सम्पतन्ति कुमारा विशिखा इव [य० १७। ४८] इतिमन्त्रोऽपिच्छन्दोग पर एवेति-निर्णयसिन्धौ। विगता मुण्डिता शिखा येषां ते विशिखा इत्यस्मिन्विषयेऽयमर्थो ज्ञातव्यः । न्यायसुधामीमांसाकौस्तुभकारादीनां मते विविधा शिखा येषां ते--इत्यर्थोऽस्य तु सामगेतरपर एवेत्यपि प्रति-पद्यन्तां प्राज्ञाः । वस्तुतो विशिखपदस्यार्थस्तु विविधशिखा-रूप एव समीचीनः प्रतिभाति, अन्यथा ऽस्मिन्मन्त्रे पक्षयुक्ते-

र्वाणैः सह सशिखमुण्डितमुण्डानां बालकानां सादृश्यं दृष्टान्ते कथं संगच्छेत। यथा विविधशिखा बालका आयान्ति,तथैव युद्धे नानापक्षयुता वाणा अप्यापतन्ति, इति दृष्टान्तार्थः स्पष्ट एवेति। अस्य कोप्यर्थः स्यात् परं सामगकुमाराणामुपनयने सशिखमेव मुण्डनं तेषां गृह्यतः सिध्यति। येषां गृह्ये सशिखमुण्डनं न विहितं तैः सशिखं मुण्डनं न कार्यम्।

सामवेदिनां गृह्ये सशिखं मुण्डनं प्रतिपादिमततस्तत्र 'सदोपवीतिना भाव्यं, सदा बद्धशिखेनेति–सामान्यशास्त्रं न प्रवर्तते, सशिखमुण्डनरूपविशेषशास्त्रेण तस्य बाधात्। तेन विशिखेन कर्मणि क्रियमाणेऽपि न तस्य कर्मणो वैफल्यं भवतीतिदिक्।

## ❀ अथोपनयनविधिः ❀

अथोपनयनकालनिर्णयः। तत्र च–ब्राह्मणस्योपनयनन्तु गर्भाऽष्टमे वर्षे भवति। गर्भादेकादशे राज्ञो, गर्भात्तु द्वादशेऽब्दे विश–इति गृह्यसूत्रवचनात ॥ एतद् द्विगुणिताब्दपर्यन्तं गौण उपनयनकालः,कथ्यते।तदूर्ध्वन्तु'पतितसावित्रीकाः संस्कारहीना भवन्तीति ॥१॥ तथा च मनुः–"आषोऽशाद् ब्राह्मणस्य, सावित्रीनातिवर्तते। आद्वाविंशात्क्षत्रबन्धोराचतुर्विंशतेर्विशः" ॥२॥

अत ऊर्ध्वं त्रयोऽप्येते, यथाकालमसंस्कृताः ॥ सावित्रीपतिता व्रात्या, भवन्त्यार्यविर्गाहिताः ॥३॥ "तत्र कालभेदो यथा"–वसन्ते ब्राह्मणमुपनयेद्, ग्रीष्मे राजन्यम् शरदि

वैश्यं *[सर्वकालमेके]—इतिशतपथब्राह्मणे ॥४॥ तत्र च-ज्योतिःशास्त्रोक्तशुभमुहूर्तदिने सूर्यगुरुचन्द्रतारादिशुद्धौ, उदगयन आपूर्यमाणपक्षेऽनध्यायषष्ठीरिक्ताद्यतिरिक्ततिथौ, रविगुरुशुक्रान्यतमवारे,मध्याह्नादर्वाक् पुत्रस्योपनयनं चिकीर्षुर्यजमानः पत्नीकुमाराभ्यां सह मङ्गलद्रव्यैः स्नात्वाऽहते वाससी परिधाय, धृततिलकः, पूजासामग्रीं सम्पाद्य, आचम्य, प्राणानायम्य गणेशादिपञ्चाङ्गदेवताः सम्पूज्य, सपुत्रः पिता बहिःशालायां प्रांगणे वा शुभासने पूर्वाऽभिमुख उपविश्य, सङ्कल्पं कुर्यात्-

**ॐ अद्येत्यादि० अमुकोऽहं स्वस्योपनेतृत्वयोग्यतायै कृच्छ्रत्रयप्रत्याम्नाय गोत्रयनिष्क्रयीभूतं सुवर्णं द्रव्यं वा ऽमुकनाम्ने ब्राह्मणाय दास्ये ॥**

तथा ऽत्र कुमारोऽपि प्रायश्चित्त सङ्कल्पं कुर्यात्—

**ॐ अद्येत्यादि० अमुकोऽहं स्वस्योपनेयत्वयोग्यतायै कृच्छ्रत्रय-गोत्रयनिष्क्रयीभूतं सुवर्णममुकगोत्रोत्पन्नायामुकप्रवरायाऽमुकशर्मणे ब्राह्मणाय दास्ये ॥ ॐतत्सन्न ममेति दद्यात् ॥**

---

* "जन्मना जायते शूद्रः, संस्काराद्द्विज उच्यते ॥"

अथाऽऽचार्यः पिता वा तत्रतुषकेशशर्करादिशून्यपरिष्कृतां हस्तमात्रपरिमितांचतुरस्रभूभावुपनयनवेद्यां पञ्चभूसंस्कारपूर्वकं समुद्भवनामाऽग्निमावाह्य संस्थाप्य च संङ्कल्पं कुर्यात्—

**ॐ विष्णुः ३ अद्येत्यादि० ममैतस्य पुत्रस्य श्रौतस्मार्तकर्म्मानुष्ठानसिद्धिद्वारा ब्रह्मवर्चोऽभिवृद्धये वेदाध्ययनाऽधिकारसिद्धयर्थं श्रीपरमेश्वरप्रीत्यर्थञ्च चातुर्वर्ण्येषु स्वस्ववेदशाखासूत्रप्रवरगोत्रमुनिवर्णितविहिताऽभिहितधर्म्मकरणानुकूल-ब्रह्मचर्य्यगृहस्थाश्रमादिषु तत्तत्फलानुसन्धानाय द्विजत्वसंसिद्धिकामः, षोडशसंस्कारान्तर्गतमुपनयनसंस्कारं करिष्ये, तत्पूर्वाङ्गतयाऽऽदौ त्रीन् ब्राह्मणान् भोजयिष्ये, तेभ्यो दक्षिणाञ्च दास्ये ॥**

ततः कुमारपित्राभ्युदयिके कृते, तदभावे त्वाचार्येणैव कृते, ब्राह्मणान्कुमारञ्च भोजयित्वा 'सशिख कृतक्षौरं" स्नानानन्तरं कुमारमाचार्यपुरुषा आचार्यसमीपे आनयन्ति। तदाचार्य्यस्तं कुमारं स्वस्य दक्षिणपार्श्वेऽग्नेः पश्चादुदङ्मुख मुपवेशयति। तदोपनेय आचार्य सम्पूजयति पश्चादाचार्यः

सङ्कल्पं कुर्य्यात्-

**ॐ अद्येत्यादि० अमुकोऽहं शिष्यपरम्परागतमेनं सहृदयं माणवकं कर्तव्योपनयनसंस्कारेणोपनयिष्ये ॥**

अथाचार्यस्तदा कृत तिलकं व्रतिनं बद्धाञ्जलिं कुमारं सम्बोधयति-

**ॐ ब्रह्मचर्य्यमागामिति ब्रूहि-इत्याचार्य्यप्रैषानन्तरं-ॐब्रह्मचर्य्यमागामिति कुमार आह ॥ पुनः-ॐ ब्रह्मचार्यसानीति ब्रूहि-इत्याचार्य्येणोक्ते, ॐ ब्रह्मचार्यसानीति कुमारो ब्रूयात् ॥**

अथाचार्य्यो माणवकं कौपीनंवासः परिधापयति ॥ तत्रमन्त्रः*-

**येनेन्द्रायेत्याङ्गिराऋषिर्बृहतीछन्दो,बृहस्पतिर्देवता, वासः परिधाने-विनियोगः ॥ ॐ येनेन्द्राय बृहस्पतिर्व्वासः पर्य्यदधादमृतम्। तेन त्वा परिदधाम्यायुषे दीर्घायुत्वाय बलाय वर्च्चसे ॥**

---

* आचार्यस्यैव मन्त्रपाठोऽयम्।

ततः-'परिदधामीति'-मन्त्रलिङ्गाद् द्विराचमनं तूष्णीं माणवकः करोति ।। ततो माणवकस्य कटिप्रदेशे वेष्टनत्रयेण तत्प्रवरसंख्याक ग्रन्थियुतां मेखलामाचार्यो बध्नाति। तदा माणवकपठनीयो मन्त्रः-

**ॐ इयं दुरुक्तमिति वामदेव-ऋषिस्त्रिष्टुप्छन्दो, मेखलादेवता, मेखलाबन्धने विनियोगः ।। ॐ इयन्दुरुक्तं परिबाधमाना ठवर्णं पवित्रम्पुनती मऽआगात् । प्राणापानाभ्यां बलमादधाना स्वसादेवी सुभगा मेखलेयम् ।।१।। अथवा-ॐयुवा सुवासा०- इति विश्वामित्र-ऋषिस्त्रिष्टुप्छन्दो, यूपो देवता, मेखलाबन्धने-विनियोगः ।। ॐ युवा सुवासाः परिवीतऽआगात्सऽउश्रेयान् भवति जायमानः । तन्धीरासः कवयऽउन्नयन्ति स्वाध्यो मनसा देवयन्तः ।।२।।**

इत्याचार्य्यः माणवकं तूष्णीं वा मेखलां बध्नीयात्-ततो वृत ब्राह्मणेभ्योऽष्टौ सफलानि सोपवीतानि पात्राणि दद्यात् ।। तत आचार्यः प्रणवपूर्वकं गायत्रीमन्त्रेण वटोः शिखाबन्धनञ्च कुर्यात्-*पुनश्चोपवीतं वामहस्ते धृत्वाऽभिमन्त्र-

* ॐ भूर्भुवः स्वः । ॐ तत्सवितुर्व्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॐ ।।

येत् ॥ तत्प्रकारो यथा-पूर्वं गङ्गोदकेनो पवीतप्रक्षालनम्-

**ॐ आपो हिष्ठेत्यादित्र्यृचस्य सिन्धुद्वीपऋषिः, आपो-देवता, गायत्रीछन्दः, यज्ञोपवीतप्रक्षालनार्थे-विनियोगः ॥ ॐ आपो हिष्ठामयोभुवस्ता न ऽऊर्ज्जे दधातन। महेरणाय चक्षसे ॥१॥ ॐ यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः ॥२॥ ॐ तस्मा ऽअरङ्गमामवो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः ।३। इति॥**

ततो यज्ञोपवीतप्रक्षालनानन्तरं दशवारगायत्रीमन्त्रैरभिमन्त्र्य तत्र नवतन्तुदेवतानामावाहनं स्थापनंचकुर्य्यात्-

**ॐप्रणवस्य ब्रह्मर्षिः, परमात्मादेवता, गायत्रीछन्दः, प्रथमतन्तौ ॐकारावाहने-विनियोगः ॥ प्रथमतन्तौ-ॐकाराय नमः ॥ ॐकारमावाहयामि,स्थापयामि।१। ॐअग्निन्दूतमितिमन्त्रस्य मेधातिथिर्ऋषिः,अग्निर्देवता, गायत्रीछन्दः, द्वितीयतन्तावग्न्याऽऽवाहने-विनियोगः ॥ ॐअग्निन्दूतम्पुरोदधे**

हव्यवाहमुपह्वये । देवाँ २ ऽआसादयादिह ॥ द्वितीयतन्तौ—ॐ अग्नये नमः ॥ अग्निमावाहयामि, स्थापयामि ॥२॥ ॐ नमोस्तु सर्प्पेभ्यो० इति मन्त्रस्य प्रजापतिर्ऋषिः, सूर्य्यो—देवता, अनुष्टुप्छन्दः तृतीयतन्तौ सर्पावाहने—विनियोगः ॥ ॐनमोस्तु सर्प्पेभ्यो ये के च पृथिवीमनु । येऽअन्तरिक्षे ये दिवि तेभ्यः सर्प्पेभ्यो नमः ॥ तृतीयतन्तौ—ॐसर्प्पेभ्यो नमः । सर्पानावाहयामि स्थापयामि ॥३॥ ॐ त्वय ᳬ सोमेत्यस्य बन्धुर्ऋषिः,गायत्रीछन्दः, सोमोदेवता चतुर्थतन्तौ सोमावाहने-विनियोगः ॥ ॐ त्वय ᳬ सोमव्रते तव मनस्तनूषु बिभ्रतः । प्रजावन्तः सचेमहि ॥ चतुर्थतन्तौ-ॐसोमाय नमः ॥सोममावाहयामि, स्थापयामि ॥४॥ ॐ उदीरतामित्यस्य शङ्खऋषिः, पितरोदेवता, त्रिष्टुप्छन्दः, पञ्चमतन्तौ पितॄनावाहने—विनियोगः ॥ ॐ उदीरतामवरऽ-

उत्परासऽउन्मध्यमाः पितरः सोम्म्यासः । असुँय्यऽईयुरव्वृकाऽऋतज्ञास्तेनोऽवन्तु पितरोहवेषु ।।पञ्चमतन्तौ-ॐ पितृभ्यो नमः।। पितृनावाहयामि, स्थापयामि ।।५।।ॐप्रजापते० इतिमन्त्रस्य हिरण्यगर्भऋषिः, प्रजापतिर्देवता, त्रिष्टुप्छन्दः, षष्ठतन्तौ-प्रजापत्याऽऽवाहनेविनियोगः ।। ॐ प्रजापते न त्त्वदेतान्न्यन्न्यो विश्श्वा रूपाणि परिता बभूव । यत्कामास्ते जुहुमस्तन्नोऽअस्तु व्वय ँ स्याम पतयो रयीणाम् ।। षष्ठतन्तौ–ॐ प्रजापतये नमः ।। प्रजापतिमावाहयामि, स्थापयामि ।।६।। ॐ आ नो नियुद्भिरित्यस्य वशिष्ठऋषिः, अनिलो देवता, त्रिष्टुप्छन्दः, सप्तमतन्तौ–अनिलावाहने-विनियोगः ।। ॐ आ नो नियुद्भिः शतिनीभिरद्ध्वर ँसहस्त्रिणीभिरुपयाहि यज्ञम् । व्वायोऽअस्म्मिन्त्सवने मादयस्व यूयम्पात स्स्वस्तिभिः सदा नः ।। सप्तमतन्तौ–ॐ अनि-

लाय नमः॥ अनिलमावाहयामि,स्थापयामि ॥७॥ ॐ सुगावः-इत्यस्याऽत्रिऋषिः, गृह-पतयो देवतास्त्रिष्टुप्छन्दः, अष्टमतन्तौ-यमावाहने-विनियोगः ॥ ॐ सुगावो देवाः सदनाऽ अकर्म्मयऽ आजग्मेद ᳪ सवनञ्जु-षाणाः। भरमाणा व्वहमाना हवी ᳪ ष्यस्म्मे धत्त व्वसवो व्वसूनि-स्वाहा॥ अष्टम-तन्तौ-ॐ यमाय नमः ॥ यममावाहयामि, स्थापयामि ॥८॥ ॐविश्वे देवासऽआगत-इतिमन्त्रस्य श्री परमेष्ठीऋषिर्गायत्रीच्छन्दः, नवमतन्तौ विश्वेदेवानामावाहने-विनि-योगः ॥ ॐ व्विश्श्वे देवासऽआगत शृणु-तामऽइमᳪहवम्। एदम्बर्हिर्निषीदत उपयाम गृहीतोसि व्विश्श्वेभ्यस्त्वा देवेभ्यऽएषते योनिर्व्विश्श्वेभ्यस्त्वा देवेभ्यः ॥ नव-मतन्तौ-ॐ व्विश्श्वेभ्यो देवेभ्यो नमः ॥ विश्वान्देवानावाहयामि, स्थापयामि ॥९॥ इति ॥ अथ ग्रन्थिदेवानावाहयेत्-ॐ ब्रह्म

जज्ञानमितिमन्त्रस्य प्रजापतिर्ऋषिः, ब्रह्मा-देवता, गायत्रीछन्दः, 'ग्रन्थिमध्ये'—ब्रह्मा-ऽऽवाहने-विनियोगः। ॐ ब्रह्म जज्ञानं प्प्र-थमं पुरस्ताद्विसीमतः सुरुचो व्वेनऽआवः। स बुध्न्न्याऽउपमाऽअस्य व्विष्ठाः सतश्च्च योनिमसतश्च्च व्विवः ॥ 'ग्रन्थिमध्ये' ॥ ॐब्रह्मणे नमः॥ ब्रह्माणमावाहयामि, स्था-पयामि॥१॥ ॐ इदं व्विष्णुरित्यस्य-मेधा-तिथिर्ऋषिर्विष्णुर्देवता, गायत्रीछन्दः, 'ग्रन्थिमध्ये'-विष्णोरावाहने—विनियोगः ॥ ॐ इदं व्विष्ण्णुर्व्विचक्क्रमे त्त्रेधा निदधे पदम्। समूढमस्य पा ँ सुरे स्वाहा॥ 'ग्रन्थिमध्ये'-ॐविष्णवे नमः॥ विष्णुमावा-हयामि, स्थापयामि ॥२॥ ॐ त्र्यम्बकमि-त्यस्य-वशिष्ठ—ऋषिः, रुद्रो देवता, त्रिष्टु-प्छन्दः, 'ग्रन्थिमध्ये'-रुद्रावाहने-विनियोगः॥ ॐ त्र्यम्बकँ य्यजामहे सुगन्धिम्पुष्टिवर्द्धं-नम्। उर्व्वारुकमिव बन्धनान्मृत्योर्म्मुक्षी-

यमामृतात् ॥ "ग्रन्थिमध्ये'–ॐ रुद्राय नमः ॥ रुद्रमावाहयामि, स्थापयामि ॥३॥ ॐ मनोजूतिर्ज्जुषतामाज्ज्यस्य बृहस्प्पतिर्य्यज्ञमिमन्तनो त्त्वरिष्ट्ँय्यज्ञ ᳕ समिमन्दधातु । व्विश्श्वेदेवा स ऽ इहमादयन्तामो ँ २ प्प्रतिष्ठ ॥ अत्राऽऽवाहितदेवताः सुप्रतिष्ठिताः वरदाः भवन्तु ॥ पुनर्यथालब्धोपचारैरावाहितदेवान् सम्पूजयेत्–ॐप्रणवाद्यावाहितोपवीतदेवताभ्यो नमः ॥ गन्धाक्षतपुष्पाणि समर्पयामि ॥

ततो यज्ञोपवीतं ध्यायेत् ॥ अथ ध्यानम्–

ॐ प्रजापतेर्यत्सहजं पवित्रं, कार्पाससूत्रोद्भवब्रह्मसूत्रम् ॥ ब्रह्मत्वसिद्ध्यै च यशः प्रकाशं, जयस्य सिद्धिं कुरु ब्रह्मसूत्रम् ॥१॥

इतिध्यात्वा ऽऽचार्य्यः यज्ञोपवीतं करसम्पुटेनिधाय, दशभिर्गायत्रीमन्त्रैरभिमन्त्र्य सूर्यायोपवीतं प्रदर्शयेत्–

ॐ उदुत्यञ्जात० ॥१॥ ॐ चित्रन्देवानाम्० ॥२॥ ॐ तच्चक्षुर्द्देवहितम्० ॥३॥

इतिमन्त्रैः सूर्य्यायोपवीतं प्रदर्श्याचार्यः माणवकस्कन्धे निवेशयति ॥ तत्रादौ–

**ॐ यज्ञोपवीतमितिमन्त्रस्य । परमेष्ठी-ऋषिस्त्रिष्टुप्छन्दो, लिङ्गोक्ता–देवता, श्रौतस्मार्तकर्म्माऽनुष्ठानसिद्ध्यर्थे, यज्ञोप–वीत परिधाने–विनियोगः ॥ ॐ यज्ञोपवीतमसीति-प्रजापतिऋषिर्यजुश्छन्दः, यज्ञोपवीतदेवता यज्ञोपवीतधारणे विनियोगः ॥ ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्स-**

× अथोपनयन [व्रतबन्ध] मुहूर्तः-तत्र गुरुशुक्रयोर्वृद्धत्वाऽस्त-शिशुत्वकालं विना, सौम्यायने सूर्ये, माघादि-पञ्चमासेषु श्रेष्ठः। सूर्येन्दुगुरुशुद्धौ मीनार्के च ब्राह्मणानां व्रतबन्धः श्रेष्ठः। तत्र नक्षत्राणि—अश्विनी, रो०, मृ०, आर्द्रा, पुन०, पुष्य, ऽश्ले०, पूर्वा० ३, उत्तरा ३, ह०, चि०, स्वा०, ऽनु०, मू०, श्र०, ध०, शत०–रे०, एतद्वेधरहिते पूर्वाह्णे च शुभः ॥ तिथयः-२।३।५।१०।११।१२-शुक्लपक्षे, तथा २।३।५-कृष्णपक्षे ऽप्युत्तमा ॥ सद्वाराः- सू० चं० बु० गु० शु० एषु, रुग्बाणादि-दोषरहिते श्रेष्ठः ॥ तत्र लग्नशुद्धिः-"त्रिषड्भस्थाः खलाः सर्वे, चन्द्रो द्विद्यूनदिक्त्रिगः। सौम्याः केन्द्रत्रिकोणस्थाः, लाभे सर्वे व्रते शुभाः॥ तत्र च चन्द्रशुक्रगुरुलग्नेशाश्च लग्नात् षडष्टभावे न शुभाः। शशिशुक्रौ लग्नाद्द्वादशे निन्द्यौ। लग्नात् १-५-८ स्थाने पापग्रहा न शुभाः। षडष्टद्वादशभावेषु सौम्यग्रहाः न शुभाः। त्रिषडेकादशे पापाः शुभफलदाः। पूर्णेन्दुः वृषभकर्कगतो लग्ने श्रेष्ठो ऽन्यथा न। लग्ने ऽर्कोऽपि शुभः॥ इति॥

हजं पुरस्तात्।आयुष्यमग्र्यम्प्रतिमुञ्चशुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ यज्ञोपवीत-मसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि ॥

एवं संपठतो मन्त्र माणवकस्य दक्षिणबाहुमुद्धृत्य वाम-स्कन्धोपरि यज्ञोपवीतं निदध्यात् ॥ ततो माणवकस्याचमन-द्वयम्, प्रदक्षिणमग्नि परीत्य माणवकोऽग्नेः पश्चिमे स्थित्वा-ऐणेय कृत्ति(मृगीचर्म)तूष्णीं समन्त्रं वा यज्ञोपवीतवद्धारयेत् ॥ तत्र मन्त्रः—

ॐ मित्रस्य चक्षुरिति-मन्त्रस्य परमेष्ठी

---

अथ यज्ञोपवीतनिर्माणविधिः—शुचौ देशे शुचिः सूत्रं, संहतांगुलिमूलके। आवेष्ट्य शण्णवत्या तत्, त्रिगुणीकृत्य यत्नतः ॥१॥ अब्लिंगकैस्त्रिभिः सम्यक्, प्रक्षाल्योर्ध्ववृतञ्च तत् । अप्रदक्षिणमावृत्तं सावित्र्याः त्रिगुणीकृतम् ॥२॥ अधः प्रदक्षिणमा-वृत्तं, समं स्यान्नवसूत्रकम् । त्रिरावेष्ट्य दृढं बध्वा, ब्रह्माविष्णुशिवान्नमेत् ॥३॥ यज्ञोपवीतं परम-मिति-मन्त्रेण धारयेत् । सूत्रं सलोमकञ्चेत्स्यात्ततः कृत्वा विलोमकम् ॥४॥ सावित्र्या दशकृत्वोऽद्भिर्म न्त्रिताभिस्तदुक्षयेत् ॥ ५ ॥ इतिमदनपारिजाते, हरिहरभाष्ये ।

**ऋषिस्त्रिष्टुप्छन्दोः लिङ्गोक्तादेवता, अजिनधारणे–विनियोगः ॥ ॐ मित्रस्य चक्षुर्द्धरणं बलीयस्तेजो यशस्वि स्थविर ᳪ समिद्धम् ॥ अनाहनस्यं वसनञ्जरिष्णु परीदं व्वाज्यजिनन्दधेऽहम् ॥**

ततो माणवकस्य द्विराचमनम् । तत आचार्यो ब्रह्मचारिणे तूष्णीं पलाश+दण्डं प्रयच्छति ॥ तत्र मन्त्रः–

**ॐ यो मे दण्ड-इति प्रजापतिर्ऋषिः, यजुश्छन्दो, दण्डो देवता, दण्डधारणे-विनियोगः ॥ ॐ यो मे दण्डःपरापतद्वैहायसोऽधिभूम्याम् ॥ तमहं पुनरादद ऽआयुषे ब्रह्मणे ब्रह्मवर्च्चसाय ॥**

इति पठित्वा ब्रह्मचारी दण्डं प्रतिगृह्णाति ॥ ततो ब्रह्मचारी दण्डमुच्छ्रयति–

**ॐ उच्छ्रयस्वेति-प्रजापतिर्ऋषिर्यजुश्छन्दो दण्डो-देवता, दण्डोच्छ्रयणे-विनियोगः ॥ ॐ उच्छ्रयस्व व्वनस्पतऽऊर्ध्वो मा पाह्य ᳪ हसऽआस्य यज्ञस्यो दृचः ॥**

---

+ यस्तु पालाशो ब्राह्मणस्य, बैल्वो राजन्यस्य, औदुम्बरो वैश्यस्येति ।

ततआचार्यः स्वाञ्जलिगृहीतवारिणा कुमारस्याञ्जलिं पूरयति--

**ॐ आपो हिष्ठेतिसिन्धुद्वीपऋषिर्गायत्रीछन्दः, आपो देवता, माणवकाऽञ्जलिपूरणेविनियोगः ॥ ॐ आपो हि ष्ठा मयोभुवस्ता न ऽऊर्ज्जे दधातन । महेरणाय चक्षसे ॥१॥ ॐ योवः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः ॥२॥ ॐ तस्मा ऽअरङ्गमामवो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥३॥**

तत आचार्यः सूर्य मुदीक्षस्वेति-प्रेषितो ब्रह्मचारी सूर्यंपश्यति-

**ॐ तच्चक्षुरिति–दध्यङाथर्वणऋष्युष्णिक्छन्दः, सूर्यो देवता सूर्यमुदीक्षणे–विनियोगः ॥ ॐ तच्चक्षुर्द्देव हितम्पुरस्ताच्छुक्रमुच्चरत् । पश्येच शरदः शतञ्जीवेम शरदः शत ँ शृणुयाम शरदः शतम्प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतम्भूयश्च शरदः शतात् ॥**

तत आचार्यो माणवकस्य दक्षिणस्कन्धोपरि स्वदक्षिण-हस्तं नीत्वा हृदयमालभते ॥

**ॐ ममेतिप्रजापति-ऋषिस्त्रिष्टुप्छन्दो, बृहस्पतिर्देवता, हृदयाऽलम्भने-विनियोगः । ॐ मम व्रते ते हृदयं दधामि मम चित्तमनुचित्तन्तेऽअस्तु । मम वाचमेकमना जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यम् ॥**

तत आचार्यः कुमारस्य दक्षिणहस्तं गृहीत्वा तं पृच्छति-

**ॐ को नामासि, ॐ कस्य ब्रह्मचार्यसि ।**

इति श्लोकेन तं पृच्छति--

**भो ब्रह्मचारिन्! बटुवेषधारिन् ! किन्नामधेयं तव मे वितर्कः।आचक्ष्व हे माणवकेन्द्रचन्द्र ! त्वं ब्रह्मचारी कतमोऽपि कस्य ॥१॥ ततः कुमारः कथयति-अमुकनामशर्म्माऽहं भोः ॥३॥ भवतो ब्रह्मचारीति ॥ अथाचार्यो भाषते-ॐ इन्द्रस्य ब्रह्मचार्यस्यग्निराचार्य्यस्तवाहमाचार्य्यस्तव श्रीअमुकशर्म्मन्!**

बटुनामान्तं इत्युक्त्वा चार्य्योबद्धाञ्जलिं कुमारं पूर्वादिदिक्षु प्रदक्षिणमुपस्थानङ्कारयति ॥ तत्राचार्यमन्त्र पाठः-

ॐ प्रजापतये त्वेति–प्रजापतिर्ऋषिः षट्यजूंषि छन्दांसि लिङ्गोक्तादेवता, रक्षणे विनियोगः ॥ ॐ प्रजापतयेत्वा परिददामि इति (प्राच्याम्) ॐ देवाय त्वा सवित्रे परिददामि इति (दक्षिस्याम्) ॐ अद्भ्यस्त्वौषधीभ्यः परिददामि–इति (प्रतीच्याम्) ॐ द्यावापृथिवीभ्यां त्वा परिददामि–इति (उदीच्याम्) ॐ विश्वेभ्यस्त्वा देवेभ्यः परिददामि (इत्यधः) ॐ सर्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्यै (इत्यूर्ध्वम्) ॥

ततः कुमारोऽग्निं प्रदक्षिणीकृत्याचार्यस्योत्तरत उपविशति ॥ ततो ब्रह्मवरणम् ॥ पाद्यादिभिर्वरणद्रव्यं ब्राह्मणञ्च, सम्पूज्य, हस्ते पुष्पचन्दनताम्बूलवासांस्यादाय सङ्कल्पं कुर्यात्-

ॐ अद्य कर्तव्योपनयनहोमकर्मणि कृताकृतवेक्षणरूपब्रह्मकर्मकर्तु-ममुकगोत्रममुक-शर्माणं ब्राह्मणमेभिपुष्पचन्दनताम्बूलवासोभिर्ब्रह्मत्वेन त्वामहं वृणे ॥ "ॐ वृतोऽस्मीति"—

प्रतिवचनम् ।। ततोऽग्नेर्दक्षिणतभागे शुद्धमासनन्निधाय, तदुपरि प्रागग्रान्कुशानास्तीर्य्य ब्रह्माणमग्नि प्रदक्षिणं कारयित्वा,

**ओ३म् अस्मिन्कर्मणि त्वं मे ब्रह्मा भवेत्यभिधाय, ओ३म् 'भवानीति'—**

तेनोक्ते, तदुपरि ब्रह्माणमुदङ् मुखमुपवेशयेत् ।। ततः—

**प्राणीतापात्रं पुरतः कृत्वा, वारिणा परिपूर्य्य, कुशैराच्छाद्य, ब्रह्मणो मुखमवलोक्याऽग्नेरुत्तरतः कुशोपरि निदध्यात् ।। ततो बर्हिषश्चतुर्थभागमादायाऽऽग्नेयादीशानान्तम् ब्रह्मणोऽग्निपर्य्यन्तम्, नैर्ऋत्याद्वायव्यान्तमग्नितः प्रणीतापर्यन्तं, परिस्तीर्य्याऽग्नेरुत्तरतः पश्चिमदिशि पवित्रच्छेदनार्थं कुशत्रयम्, पवित्रकरणार्थं साग्रमनन्तर्गर्भं कुशपत्रद्वयम्, प्रोक्षणीपात्रमाज्यस्थाली, सम्मार्जनकुशाः पञ्च, वेणीरूपोपयमनकुशाः सप्त, पलाशसमिधस्तिस्रः स्रुवः आज्यम्, षट्पञ्चाशदुत्तरमुष्टिशतद्वयावच्छिन्नतण्डुलपू**

र्णपात्र मेतानि पवित्रच्छेदनकुशानां पूर्वपूर्व-दिशि क्रमेणाऽऽसादनीयानि। ततःपवित्रच्छेदनकुशैः स्वप्रादेशामित पवित्रे छित्वा, दक्षिणकरेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधाय, व्यस्तं द्वाभ्यामनामिकाङ्गुष्ठाभ्यामुत्तराग्रे पवित्रे गृहीत्वा, प्रोक्षणीजलस्य त्रिरुत्पवनं कुर्यात् ।। पुनः प्रोक्षणीपात्रं वामहस्ते धृत्वा, दक्षिणाऽनामिकाङ्गुष्ठाभ्यामुत्तराग्रे पवित्रे गृहीत्वा, तेन प्रोक्षणीजलं त्रिरुत्क्षिप्य, प्रणीतोदकेन प्रोक्षणी मभिषिच्य, प्रोक्षणीजलेनाऽऽसादितवस्तुसेचनम्, ततोऽग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रं निदध्यात् ।। तत-आज्यस्थाल्यामाज्यं निरूप्याऽधिश्रित्य, ज्वलत्तृणेन हविर्वेष्टयित्वा, वह्नौ तत्प्रक्षिपेत ।। स्रुवमधोमुखञ्च त्रिः प्रतप्य:सम्मार्जनकुशानाग्रै रन्तरतो मूलैर्बाह्यतः संमृज्य, प्रणीतोदकेनाऽभ्युक्ष्य पुनः प्रतप्य, स्वदक्षिणतः कुशोपरि निदध्यात् ।। तत-आज्यम-

ग्नेरुत्तराग्न्याऽग्रतः संस्थाप्य, प्रोक्षणीवत् त्रिरुत्पूयावेक्ष्य, सत्यपद्रव्ये तन्निरस्य, पुनः पूर्ववत्प्रोक्षण्युत्पवनं कुर्य्यात् ॥ उपयमन-कुशांश्च वामहस्ते कृत्वोत्तिष्ठन्प्रजापतिं मनसा ध्यात्वा, तूष्णीं घृताक्ताः समिधस्ति-स्रोऽग्नौ प्रक्षिपेत ॥ तत-उपविश्य, सप-वित्रप्रोक्षण्युदकेन ईशानमारभ्येशानान्तं-प्रदक्षिणक्रमेणाऽग्निं पर्य्युक्ष्य, प्रणीतापात्रे पवित्रं निधाय, पातितदक्षिणजानुर्ब्रह्मणाऽन्वारब्धः, समिद्धतमेऽग्नौ स्रुवेणाज्याहु-तीर्जुहुयात् ॥

तत्राऽऽघारमारभ्य द्वादशाहुतिपर्य्यन्तं प्रत्याहुत्यनन्तरं स्रुवावस्थित हुतशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः कर्तव्यः ॥ ततोऽग्निं ध्यानाऽऽवाहनादिभिः सम्पूज्य होमः कार्य्यः ॥

ॐ प्रजापत्यादि-चतुर्णां मन्त्राणां प्रजा पतिर्ऋषिस्त्रिष्टुप्छन्दः, प्रजापतीन्द्राग्नि-सोमा देवताऽऽज्यहोमे- विनियोगः ॥ ॐ प्रजापतये स्वाहा, इदं प्रजापतये न मम ।१।

(ततोऽग्निमध्ये)-ॐ इन्द्राय स्वाहा, इदमिन्द्राय ॥२॥ (ततोऽग्निपूर्वार्द्धे)-ॐ अग्नये स्वाहा, इदमग्नये ॥३॥ ॐ सोमाय स्वाहा, इदं सोमाय ॥४॥ ॐ भूर्भुवः स्वरितिमहाव्याहृतीनां प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुप्छन्दांसि, अग्निवायुसूर्य्या-देवता, उपनयनाङ्गप्रधानहोमे-विनियोगः ॥ ॐ भूः स्वाहा, इदमग्नये न मम ॥१॥ ॐ भुवः स्वाहाः इदंवायवे न मम ॥२॥ ॐ स्वः स्वाहा, इदं सूर्य्याय न मम ॥३॥ इति महाव्याहृतयः। ततः-ॐ त्वन्नो, ॐ सत्वन्नो०-मन्त्रद्वयस्य वामदेवर्षिस्त्रिष्टुप्छन्दोऽग्नीवरुणौ देवते प्रायश्चित्तहोमे-विनियोगः ॥ ॐ त्वन्नोऽअग्ने व्वरुणस्य व्विद्वान्देवस्य हेडोऽअवयासिसीष्ठाः ॥ यजिष्ठो व्वह्नितमः शोशुचानो व्विश्श्वाद्द्वेषा ᳪसि प्रमुमुग्ध्यस्म्मत्-स्वाहा॥ इदमग्नीवरुणाभ्यां, न मम ॥ १ ॥ ॐ स त्वन्नो ऽअग्ने

वमो भवोतीनेदिष्ठठो ऽअस्याऽउषसो व्यु ष्ट्टौ । अवयक्ष्व नो व्वरुण ँ रराणो व्वीहि मृडीक ँ सुहवो न ऽएधि-स्वाहा ॥ इदमग्नि वरुणाभ्यां, न मम ॥२॥ ॐ अयाश्चाग्गन—इतिमन्त्रस्य विराट् ऋषिर्गायत्रीछन्दोऽग्निर्देवता, प्रायश्चित्तहोमे—विनियोगः ॥ ॐ अयाश्चाग्ग्ने स्यनभिशस्तिपाश्च सत्यमित्त्वमयाऽअसि । अयानो यज्ञं व्वहास्ययानो धेहि भेषज ँ स्वाहा ॥ इदमग्नये अयसे, न मम ॥३॥ ॐ ये ते शतमिति—शुनःशेफऋषिस्त्रिष्टुप्छन्दो, लिङ्गोक्ता देवताः प्रायश्चित्तहोमे—विनियोगः ॥ ॐ ये ते शतं व्वरुण ये सहस्र यज्ञियाः पाशा व्वितता महान्तः । तेभिर्नो ऽअद्य सवितोत व्विष्णुर्व्विश्वे मुञ्चन्तु मरुतः स्वर्क्काः—स्वाहा ॥ इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो—देवेभ्यो मरुद्भ्यः स्वर्क्केभ्यश्च, न मम ॥४॥ ॐ उदुत्तममिति—शुनःशेफऋषिस्त्रि-

ष्टुप्छन्दो, वरुणो—देवता, प्रायश्चित्तहोमे—विनियोगः ।। ॐ उदुत्तमं वरुणपाशमस्म-दवाधमं विमध्यमꣳ श्रथाय ।। अथा वय-मादित्यव्रते तवानागसो ऽअदितये स्याम-स्वाहा ।। इदं वरुणायाऽऽदित्यायाऽदितये च न मम ।।५।।

एताः प्रायश्चित्त-संज्ञकाः ।।

ॐ प्रजापतये स्वाहा-इदं प्रजापतये न मम।१।

तदन्ते स्विष्टकृद्धोमं कुर्यात्—

ॐ अग्नये स्विष्टकृते-स्वाहा ।। इदमग्नये स्विष्टकृते न मम ।।२।।

ततः संस्रव-प्राशनम् ।। आचम्य ब्राह्मणः पूर्णपात्रश्च सम्पूज्य प्रणीतोदकेन सङ्कल्पं कुर्यात्-

ॐ अद्येत्यादि० ममैतस्य कृतैतदुपनयना-ङ्गीभूतहवनकर्म्मणि कृताऽकृतावेक्षणरूपब्रह्म-कर्मणः प्रतिष्ठार्थमिदं सदक्षिणां पूर्णपात्रं प्रजापति-दैवतममुकगोत्रायाऽमुकनामशर्म्म-णे ब्राह्मणाय तुभ्य महं सम्प्रददे।ॐ स्वस्तीति

प्रतिवचनम् । ततो ब्रह्मणो ग्रन्थि विमोकः ॥ ततः

**ॐ सुमित्रिया नऽ०-इतिदध्यङ् ङाथर्वण-ऋषिरापो देवता, शिरः प्रोक्षणे मार्जने वा विनियोगः ॥ ॐ सुमित्त्रिया नऽआपऽओषधयः सन्तु ॥**

इतिमन्त्रेण पवित्रकं ग्रहीत्वा प्रणीताजलेन शिरः सम्मृज्य, ततः–

**ॐ दुर्म्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मः ॥**

इति ऐशान्यां प्राणीतापात्रं न्युब्जीकरणम् ॥ ततः–

**ॐ आपः शिवाः शिवतमाः शान्ताः शान्ततमास्ते कृण्वन्तु भेजषम् ॥**

इति मन्त्रेण ॥ पुनः पवित्राभ्यां मार्जनम् ॥ ततः–

**ॐ देवा गात्विति अत्रि-ऋषिरुष्णिक् छन्दो, मनसस्पतिर्देवता, बर्हिर्होमे-विनियोगः ॥ देवा गातुव्विदो गातुं व्वित्त्वा गातुमित । मनसस्पतऽइमन्देवयज्ञ ँ स्वाहा व्वातेधाः ॥**

इति बर्हिर्होमः ॥ तत आचार्य्यः कुमारं शिक्षयति ।

यथा आचार्यः- "ॐ ब्रह्मचार्यसि", माणवकः-"ॐ ब्रह्मचारी-भवामि" ॥ १ ॥ आचार्यः-"ॐ आपोशान," ब्रह्मचारी-"ॐ अश्नानि," ॥२॥ आचार्यः-"कर्म कुरु," ब्रह्मचारी-"करवाणि" ॥३॥ आचार्यः-"ॐमा दिवा सुषुप्थाः," ब्रह्मचारी-"ॐ न स्वपानि" ॥४॥ आचार्यः-"ॐ वाचं यच्छ," ब्रह्मचारी-"ॐयच्छामि" ॥५॥ आचार्यः-"ॐ समिधमाधेहि," ब्रह्मचारी-"ॐआद्धामि" ॥६॥ आचार्यः-अपोऽ शान, ब्रह्मचारी-अश्नानि ॥

विशेषं श्लोकैरुपदिशत्याचार्यः-

सद्ब्रह्मचर्य्यादिदशाविशेषैर्ब्रह्माण्डकार्याणि यथा विभागम् ॥ वेदाज्ञया शिष्य ! समाचर त्वं, तत्कर्मधर्माह्वयतां लभस्व ॥१॥ उपास्यतां संयमयोगपूर्वं, मातेव कल्याणरसं सृजन्ती । अङ्गैरुपाङ्गैः कलिता त्रयीयं, यतः स्फुरेन्मानससारसश्रीः ॥२॥ प्रारब्ध-

वेगेन समृद्धिभोगो, न विद्यया साध्यत एष पीनः । विद्यापि वैदुष्यमुपार्जयन्ती, जागर्ति लोकद्वयसाधनाय ॥३॥ भूयांसि शास्त्राणि न तानि सर्वैर्ज्ञातुं तथा श्रोतुमपि क्षमाणि ॥ तस्मादितः-सार इयुदारभावो, ग्राह्योऽधुना सोऽपि हिताय लोके ॥४॥ प्रायोऽधुना संस्कृतपुस्तकेभ्यो, वैमुख्यभाजो बहवो हि ते तु ॥ प्रबोधनीया खलु राजवाणी, वयस्यवैदेशिकभाषयाऽपि ॥५॥ चिरन्तनोदन्तनिदर्शनेन, सद्ब्रह्मचर्यादिमहाव्रतेन । निधीयतां माणवकव्रजेषु, प्रशस्तविद्याबलवीर्यभावः ॥६॥ सदा सदाचारविचारदीक्षा, तत्कर्मदीक्षा सुतरामपेक्ष्या । येनास्य याताः पितरो महान्तस्तेनैव यातव्यमिति स्मर त्वम् ॥७॥

अथ दैवज्ञबोधिते दीक्षालग्ने लग्नदानं कुर्यात्—

अमुकोऽहममुकराशेरस्य पुत्रस्य स...ग्रहणलग्नात् (अमुक) स्थानस्थ-

**तेन (अमुक) ग्रहेण, सूचिताऽरिष्टनिवृत्ति-द्वारा—शुभफलप्राप्तये, ग्रहाणां प्रीतये,इदं सुवर्णं सुवर्णनिष्क्रयीभूतं द्रव्यं वा दैवज्ञाय ब्राह्मणेभ्यश्च, दास्ये ॐ तत्सन्न मम ॥ ततोगुरुवरणम् ॥ पाद्यादीनि समर्पयामि ॥ वरणद्रव्याय नमः ॥ ॐगुरवे नमः ॥ इति सम्पूज्य ॥ अद्येत्यादि० अमुकोऽहं, मम श्रौतस्मार्तकर्माधिकारसम्पादकद्विजत्वसि-द्धये, ब्रह्मगायत्रीदीक्षाग्रहणकर्मणि, एतेन वरणद्रव्येणामुकदैवतेनाऽमुकगोत्रममुकश-र्माणं ब्राह्मणं गुरुत्वेन त्वां वृणे ॥ इति वर-णद्रव्यं दद्यात् ॥ गुरुः—वृतोस्मि ॥**

ततः शङ्खघण्टाभेरीमृदङ्गतूर्य्यवादित्रादिरवे जायमाने वेदध्वनिना सह पतिपुत्रवतीस्त्रीणां मङ्गलवारजालैर्विताडित-दिगम्बरे यज्ञमण्डपे शुभलग्ने, गुरुमीक्षमाणाय गुरुणा समी-क्षितायाऽऽचान्तोदकाय माणवकायाऽग्नेरुत्तरतः, स्वस्य दक्षि-णतः, पश्चिममुखोपविष्टाय, आचार्यः (पिता वा) प्रणव-व्याहृतिपूर्विकां ब्रह्मगायत्रीं दक्षिणकर्णे त्रिवारं यथाक्रमं श्रावयेत् ॥ तत्र बटुश्च पुष्पफलादिभिर्गुरोः व्यस्तहस्ताभ्यां,

दक्षिणहस्तेन दक्षिणं पादं वामहस्तेन वामं पादं गृहीत्वा–

अमुकगोत्रोऽमुकप्रवरो ऽमुकवेदान्तर्गताऽमुकशाखाध्यायी अमुकशर्माऽहं भो गुरो! त्वामभिवादये। इत्येतदुपसंग्रहणं नाम। गुरुश्च आयुष्मान्भव, सौम्यामुकशर्मन् भोः! इत्याशिषम्प्रयुञ्जीत ॥ ततः सावित्री दानम् ॥ गायत्र्या–विश्वामित्रऋषिर्गायत्रीछन्दः, सविता-देवता, सावित्रीदाने–विनियोगः ॥

इत्यार्षादिकं स्मृत्वा प्रणवव्याहृतिपूर्वां गायत्रीं [प्रथम-द्वितीय-तृतीय-पादक्रमेण] ब्रूयात् ॥ तद्यथा-

ॐभूर्भुवः स्वः, तत्सवितुर्वरेण्यं–इति प्रथमवारम् ॥ ॐ भूर्भुवः स्वः, तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि-इति द्वितीयवारम् ॥ ॐभूर्भुवः स्वः, तत्सवितुर्व्वरेण्यम्भर्गो देवस्य धीमहि, धियो यो नः प्रचोदयात् ॐइति तृतीयवारंसर्वां गायत्रीं ब्रूयात् वाचयेच्च ॥ इति गायत्री ब्राह्मणस्य ॥

त्रैस्टुभीक्षत्रियस्य ॥ जागती—वैश्यस्य ॥ यद्वासर्वेषामेव पूर्वांगायत्रीं ब्रूयात् ॥क्षत्रियस्यॐ ता ँ सवितुर्व्वरेण्यस्य चित्रामाहं-व्वृणे सुमतिं व्विश्वजन्याम्। यामस्य कण्वोऽअदुहत् प्रपीना ँ सहस्रधाराम् पयसा महीं गाम्। वैश्यस्य तु ॥ ॐ व्विश्वा रूपाणि प्रतिमुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे व्विनाकमख्यत्सविता व्वरेण्योऽनुप्रयाणमुषसोव्विराजति ॥इति॥ गुरुदक्षिणा-दानम् ॥ पाद्यादीनि समर्पयामि ॥ दक्षिणाद्रव्याय नमः ॥सम्पूज्य—ॐ अद्येत्यादि० मया कृतस्याऽस्य ब्रह्मगायत्रीदीक्षाग्रहण-कर्म्मणः साङ्गफलावाप्तये, इदं सुवर्णमग्नि-दैवतं श्रीगुरुवे तुभ्यं सम्प्रददे ॥

तस्मिन्नेवावसरे स्मार्त्तधर्मानुसारेणपञ्चायतनदीक्षामपि गृह्णाति ॥ ततस्तत्कालोपस्थितां सन्ध्यां कुर्वीत—

ब्रह्मचारीकर्तृकः सुश्रुवाहोमः* ॥ अथ

* 'स्वाहा' शब्दस्य चात्र न प्रयोगः। 'अत्र तु समिदाधानं होमः।'

समिदाधानम्। अग्नेः पश्चिमतः उपवि-
श्याऽऽचम्य, प्राणानायम्य, दक्षिणपाणिना
ऽग्निं परिसमूहति॥ ॐ अग्ने सुश्रुव०—
इति पञ्चमन्त्राणां ब्रह्माऋषिर्यजूँषि
छन्दांसि, अग्निर्देवताऽग्निसमिन्धने-विनि-
योगः। ॐ अग्ने सुश्रुवः सुश्रवसं मां कुरु॥
ॐ यथा त्वमग्ने देवानां सुश्रवः सुश्रवाऽ-
असि॥ ॐएवम्मा ँसुश्रवःसौश्रवसङ्कुरु॥
ॐयथा त्वमग्ने देवानाँय्यज्ञस्य निधिपाऽ-
असि॥ ॐ एवमहं मनुष्याणां वेदस्य नि-
धियो भूयासम्॥

केचित्तु—मन्त्रत्रयमेव वदन्ति॥ एभिः पञ्चभिर्मन्त्रैर-
ग्निसन्दीपनम्॥ ब्रह्मचारी दक्षिणहस्तेन जलमादाय, ईशा-
नादारभ्येशानपर्यंतं भ्रामयेत्॥ पर्युक्ष्योत्थाय प्रादेशमितामे-
कांसमिधमादाय, कर्णसम्मितां कृत्वा—

ॐ अग्नय:०—इति प्रजापतिऋषिराकृ-
तिश्छन्दः, समिद्देवता, समिदाधाने-विनि-
योगः समिधं हस्ते चादाय॥ ॐ अग्नये

समिधमाहार्षं बृहते जातवेदसे। यथा त्वमग्ने समिधा समिध्य स ऽएवमहमायुषा मेधया व्वर्च्चसा प्रजया पशुभिर्ब्रह्मवर्च्चसेनसमिन्धे जीवपुत्रो ममाचार्यो मेधाव्यहमसान्यनिराकरिष्णुर्य्यशस्वी तेजस्वी ब्रह्मवर्च्चस्यन्नादो भूयास ᳪ स्वाहा। अनेनैव मन्त्रेण द्वितीयां तृतीयां चसमिधं*जुहोति माणवकः ॥ ॐ एषा त-इति प्रजापतिर्ऋषिरनुष्टुप्छन्दः समिद्देवता, समिदाधाने-विनियोगः ॥ ॐ एषा ते ऽअग्ने समित्तया वर्धस्व चाप्यायस्व च व्वर्धिषीमहि च व्वयमाचप्याशिषीमहि स्वाहा ॥ द्वितीयां तृतीयाञ्च वा समिधाञ्जुहोति उभयोर्वा मन्त्रेण समुच्चयेनैकां द्वितीयां तृतीयाञ्च समिधामाधानं कार्यम् ॥ सुश्रुव–होमादिकं पूर्ववत्कृत्वा, तूष्णीं पाणिं प्रतप्य, मुख वि-

* जुहोतीति—एतच्च समिदाधानं न होमः अतोऽत्र न त्याग वाक्यप्रयोगः।

मृशेत् ॥ ॐ तनूपाऽग्ग्ने ऽसीत्यादीनां बृहद्देवा ऋषियस्त्रिष्टुप्छन्दोऽग्निर्देवता, मुखसंमार्जने--विनियोगः ॥ ॐ तनूपा ऽअग्ग्नेऽसि तन्वं मे पाहि ॥ ॐ आयुर्दाग्ग्नेऽस्यायुर्म्मे देहि ॥ ॐ व्वर्च्चोदाऽअग्नेऽसि व्वर्च्चो मे देहि ॥ ॐ अग्ग्ने यन्मे तन्वाऽऊनं तन्मऽआपृण ॥ ॐ मेधांमे देवः सविताऽआदधातु ॥ ॐ मेधां मे देवी सरस्वतीऽआदधातु ॥ ॐ मेधाम्मेऽअश्विनौ देवावाधत्तां पुष्करस्त्रजौ ॥ एभिः सप्तभिर्मन्त्रैः प्रतिमन्त्रं मुखं प्रोच्छति ॥

अत्र च केचन पदार्थाः समाचारपरम्पराप्राप्तया लिख्यन्ते ॥ अप्रलब्ध--पाणिभ्यां शिरः प्रभृतिपा दपर्यंतानि सर्वांगानि समालभते ॥ ततो दक्षिणहस्तेन स्पर्शः-

ॐ वाक् च मऽआप्यायतामिति--मुखम् ॥

ॐप्राणश्च मऽआप्यायतामितिनासिकाद्वयम्॥

ॐ चक्षुश्च मऽआप्यायतामितिनेत्रद्वयम् ॥

ॐ श्रोत्रञ्च मऽआप्यायतामिति-कर्णद्वयम् ॥

**मन्त्रावृत्या पृथक् २। ॐ यशो बलञ्च मऽआप्यायतामितिबाहुद्वयम् ॥**

मन्त्रावृत्या पृथक् ॥२॥ समालभ्याऽनामिकया ऽग्नेः भस्म गृहीत्वा, त्र्यायुषं कुरुते ॥

**ॐ त्र्यायुषमिति—नारायणऋषिरनुष्टुप्छन्दोऽग्निर्देवता त्र्यायुषकरणे—विनियोगः ॥ ॐ त्र्यायुषञ्जमदग्नेरितिललाटे। ॐ कश्यपस्य त्र्यायुषमितिग्रीवायाम् ॥ ॐ यद्देवेषु त्र्यायुषमिति-दक्षिणांसे। ॐ यद्देवेषु त्र्यायुषमिति-वामांसे ॥ ॐ तन्नोऽअस्तु त्र्यायुषमिति-हृदि ॥**

ततो ब्रह्मचारी हस्तद्वयेन कर्णद्वयं गृहीत्वा-

**अमुकगोत्रोऽमुकप्रवरोमुकशाख्यमुकवेदाऽध्याय्यमुकशर्म्माऽहं, भो अग्ने! त्वामभिवादये ॥ वारत्रयमिति कृत्वा, भो गुरो! त्वामभिवादये ॥ "आयुष्मान् भव" सौम्येति-गुरुर्ब्रूयात् ॥**

ततो भिक्षाचरणम् ॥ तत्र श्लोकैरुपदिशत्याचार्यस्तम्-

**"उत्तिष्ठ प्रीतोऽस्मिचिराय जीव, वत्सः**

**स कालस्तव भिक्षणस्य ॥ भिक्षा विधेया-ऽभिहिता विधेया, मातुः पुरोपेत्य ततः क्रमेण" ॥१॥ "यद्यद्धवेद्-शाश्वतलोक-वृद्धिस्तत्तद् विधेयं नियतं विधेयम् ॥ अये वृथाऽऽलापकथाप्रथाभिर्न यापनीयः समयो ह्यमूल्यः" ॥२॥**

आचार्य्यं, इत्युपदिश्य, ब्रह्मचारी भक्ष्यभोज्यद्रव्यसहितं भिक्षापात्रञ्चावलम्ब्यनवपीतपटनिर्मितझोलिकां दक्षिण-स्कन्धे निधाय, हस्ते दण्डमवगृह्य, भिक्षार्थं गच्छेत् ॥ तत्र प्रथमं मातरं भिक्षेत् ॥

**ॐ भवति ! भिक्षां देहि, मातः,—इति ब्राह्मणः । भिक्षां भवति देहि, मातः,—इति क्षत्रियः ॥ भिक्षां देहि, भवतीति—वैश्यः ॥ अन्यत्र तु—'भवन् भिक्षांदेहीति' ॥**

भिक्षादानकाले—ॐ स्वस्तीत्युक्त्वा भिक्षां प्रतिगृह्य गुरवे [आचार्याय] निवेदयेत् तथैव भिक्षान्तरं*याचेत ॥ भो

---

मनु-मातरं वा स्वसारं वा, मातुर्वा भगिनीन्निजाम् । भिक्षेत भिक्षां प्रथमं, याचैनन्नावमानयेदिति ॥ तदुक्तं याज्ञवल्क्येन गुरुञ्चैवा प्युपासीत् स्वाध्यायार्थं समाहितः । आहूतश्चाप्यधीयीत, लब्धं चास्मै निवेदयत् ॥ आदिमध्यावसानेषु, भवच्छब्दोपलक्षिता । ब्राह्मणक्षत्रिय विशां, भैक्षचर्या यथाक्रमम् ॥ सूत्रञ्च-भवत्पूर्वां ब्राह्मणो भिक्षेत, भव न्मध्यां राजन्यो, भवदन्त्यां वैश्यः तिस्रोऽप्रत्माया[अ]त्यिन्यः षड्वा दश-

गुरो ! इयं भिक्षाऽद्य मया लब्धेति निवेद्य, अथाहःशेषं वाग्यतस्तिष्ठेदासीनो वा ॥ ततो गुरुर्ब्रह्मचारिणे ब्रह्मचर्य-नियमान् श्रावयति—

**'भूमौ शयनम्, क्षारलवणादि-निवृत्तिः ॥ दण्डधारणम् । अग्निपरिचरणम् । (अरण्यात् स्वयं शीर्णाः समिध आनीय सायं प्रातः, सन्ध्योपासनपूर्वकं परिसमूहनादि त्र्यायुष-करणान्तं यथोक्तकर्म प्रतिदिनं कुर्यात्) गुरुशुश्रूषाभिक्षाचर्या सायं प्रातर्भोजनार्थं भोजनसान्निध्ये वारद्वयं वाऽनिन्द्य कर्मनिष्ठवेदाध्यायिब्राह्मणगृहे गुर्वाज्ञया भैक्ष्यं याचित्वा, भोजनविधिना भुञ्जीत । मधु-क्षौद्रं मांसञ्च कदापि नाश्नीयात् । नद्यादि-जलाशये प्रविश्य स्नानं नाचरेत्, किन्तूद्-धृतोदकेन स्नायात् । खट्वादावुपर्यासनं**

---

अपरिमिता वा मातरं प्रथमाम् ॥ इति विधिः ॥ कार्या भिक्षा सदाधार्यं, कौपीनं कटिसूत्रकम् । कौपीनमहतंधार्यं, दण्डं वा वस्त्रपार्श्वयुक् ॥१॥ यज्ञोपवीतमजिनम् मौञ्जीदंण्डञ्च धारयेत् ॥ नष्टे भ्रष्टे नवं मन्त्रात् धृत्वा भ्रष्टं जले क्षिपेत् ॥२॥ एवं स्नातकस्य कीर्तिर्भवति-त्रयः स्नातकाः-विद्यास्नातकः- व्रतस्नातकः विद्याव्रतस्नातकः-इति ।

वर्जयेत्। स्त्रीगमनं नग्न–स्त्री निरीक्षणं, स्त्रीणांमध्येऽवस्थानं च वर्जयेत् ॥ वृक्षारोहणम्, विषमभूमिलंघनम् लघुशंकाशौचकाले दक्षिणकर्णे यज्ञोपवीतधारणम् ॥

इत्युपनयनकालादारभ्य--समावर्तनावधि, ब्रह्मचारिणः कृत्य धर्मशास्त्रतो निर्दर्शितम् ॥ तदेव श्लोकैरुपदिशेत्--

'न खादनीयो मधुरोऽप्यखाद्यो, न वर्जनीयोऽपि स्ववीर्य्यविन्दुः। चित्ते परस्त्रीविमुखप्रवृत्तिर्यथा भवेत्साऽपि तथा यथा यतस्व ॥१॥ शारीरिकं मानसिकञ्च वीर्य्यमत्यर्थमिष्टं फलसाधनाय ॥ इत्यादरादेव स वेदवेदं, तं ब्रह्मचर्य्याह्वयमाह योगम् ॥२॥ संसर्गजातेन कुचेष्टितेन, जायेत संक्रान्तमलोमणिश्च। हेयः कुसङ्गोत इतीह यत्नादुदारसंस्काररसाऽऽश्रयेण ॥३॥ धर्मच्युतानां निजकुप्रथानां, प्रचारमालोच्य न, सत्कुरुत्वम्। वेदोपवेदोद्धरसुस्वभावो, विशिष्टशिष्यो भव मे निदेशः ॥४॥ यया भवेच्छा-

श्वतधर्मवृद्धिस्तथा समृद्धिः खलु सैव शिक्षा। वर्णस्व भावान्परिणामयन्ती, नान्या मता भारतवैभवाय ॥५॥

इति विज्ञ आचार्यः श्लोकार्थान्नृभाषया माणवकं श्रावयेत् ॥ तत आगतब्राह्मणा अपि, 'ब्रह्मवर्चस्वी भवे'-त्याशीर्वदेयुः ॥ तत-आचार्यादीन् गन्धादिभिः सम्पूज्य, तेभ्यो दक्षिणाञ्च, दत्वा ब्राह्मणभोजन-सङ्कल्पः- भूयसी दक्षिणा-सङ्कल्पश्च कार्यः । तैः प्रदत्ता आशिषो गृहीत्वा, यथासुखं विरमेत् ॥

## ❀ अथ वेदारम्भविधिः ❀

पारम्पर्याऽऽगतो येषां, वेदः सपरिबृंहणः। यच्छाखाकर्म कुर्वीत, तच्छाखाऽध्ययनं तथा ॥ १ ॥ अधीत्यशाखामात्मीयामन्यशाखां ततः परम् । स्वशाखां यः परित्यज्य(अन्यामधीते) शाखारण्डः स उच्यते ॥२॥ उपनीय गुरुः शिष्यं, महाव्याहृति पूर्वकम् वेदमध्यापयेदेनं, शौचाऽऽचारांश्च शिक्षयेत्

यदि आचार्य एक ही दिन में-[१] यज्ञोपवीत (जनेऊ धारण), [२] वेदारम्भ (चारों वेदों का प्रारम्भ) [३] समा-

वर्तन (गृहस्थाश्रम–प्रवेशः) इन तीनों वेदियों का कृत्य कराना चाहें, तो नवग्रहादि पूजन पृथक न होगा। अन्यथा पृथक २ पूजन करना होगा। तथा तीनों हवन वेदियों पर कुशकण्डिका तो पृथक २ होगी। यज्ञोपवीत संस्कार के अनन्तर वेदारम्भ कर्म्म किया जाता है ॥ तद्यथा ॥

तत्राचार्यो वेदाऽऽरम्भवेदीसमीपमागत्योपविश्याऽऽचम्य, प्राणानायम्य, गणपत्यादिकं नमस्कृत्य, पञ्चभूसंस्कारपूर्वकमग्निस्थापनं विधाय, तत्राऽर्घ पात्रं संस्थाप्य, ब्रह्मोपवेशनादि-पर्युक्षणान्तं, कर्मकृत्वा, सङ्कल्पं कुर्यात् ॥

**ॐ अद्येहेत्यादि अमुकराशेरस्य वटोः श्रौतस्मार्त्त कर्माधिकार सम्पादकब्रह्मगायत्री-मन्त्रदृढीकरणार्थं, यजुर्वेदादिक्रमेण वेदारम्भं करिष्ये ॥ इति सङ्कल्प्य ॥ प्रतिज्ञाय ब्रह्माणं सम्पूज्य वृणुयात् ॥ ॐ अद्येहेत्यादि-कर्तव्यवेदारम्भाङ्गीभूतहवनकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्म कर्तुमनेन वरणद्रव्येणाऽमुकदैवतेनाऽमुकशर्माणं ब्राह्मणं ब्रह्मत्वेन त्वामहं वृणे। ततः। स्रुवेण मध्ये दीर्घाकाराहुतीरित्यन्तं विधाय, देवताभिध्यानं**

करोति ॥ ॐ अद्येह–अस्य बटोः वेदाऽऽर-म्भकर्मणाऽहं यक्ष्ये ॥ तत्र–प्रजापतिमिन्द्र-मग्निम्, सोममन्तरिक्षम्, वायुम्, ब्रह्मा-णम्, छन्दांसि, पृथिवीमग्निम्। ब्रह्माणम्, छन्दांसि। दिवम्, सूर्य्यम्, ब्रह्माणम् छन्दां-सि, दिशश्चन्द्रमसम्। ब्रह्माणम् छन्दांसि। प्रजापतिम् देवान्, ऋषीन्, श्रद्धाम्, मेधाम्, सदसस्पतिमनुमतिमग्निम् वायुम्, सूर्य्यम्, अग्नीवरुणावग्निवरुणावग्निम्, वरुणम्, स-वितारम्, विष्णुम् विश्वान्, देवान् मरुतः, स्वर्कान्, वरुणमदितिम्, प्रजापतिम्, स्वि-ष्टकृतञ्चाज्येनाऽहं यक्ष्ये ॥ इदमाज्यं तत्त-द्देवताभ्यो मया परित्यक्तं, यथादैवतमस्तु॥ (मनसा) प्रजापतिन्ध्यात्वा, आघारावा—ज्यभागौ हुत्वा, ॐ एतन्ते इत्यादि ॥ ॐ भूर्भुवः स्वः, हरिनामाऽग्ने सुप्रतिष्ठितो भव ॥ अथाऽग्नेः पूजनम्। ॐ अद्य हेत्यादि-असुकोऽहं अमुकराशेरस्य बटोः वेदाऽऽरम्भ-

होमकर्मणि हरिनामाग्नेः पूजनं करिष्ये ॥

ॐ तदेवाग्निरितिमन्त्रेण–ध्यानाऽऽवाहनासनपाद्यादि–नीराजनान्तं, सम्पूज्य ॥ दक्षिणं जान्वाच्य, ब्रह्मणाऽन्वारब्धो [मनसा] प्रजापतिं ध्यात्वा जुहुयात् ॥

ॐ प्रजापतये–स्वाहा, इदं प्रजापतये ॥ ॐ इन्द्राय स्वाहा, इदमिन्द्राय ॥ ॐ अग्नये-स्वाहा, इदमग्नये ॥ ॐ सोमाय–स्वाहा, इद ँ सोमाय ॥ अथ यजुर्वेदाहुतयः ॥ ॐ अन्तरिक्षाय-स्वाहा, इदमन्तरिक्षाय ॥ ॐ वायवे–स्वाहा, इदं–वायवे ॥ ॐ ब्रह्मणे–स्वाहा, इदं ब्रह्मणे ॥ ॐ छन्दोभ्यः स्वाहा, इदं छन्दोभ्यः ॥ अथ ऋग्वेदाहुतयः ॥ ॐ पृथिव्यै स्वाहा, इदं पृथिव्यै न मम ॥ ॐ अग्नये स्वाहा, इदमग्नये ॥ ॐ ब्रह्मणे स्वाहा, इदं ब्रह्मणे ॥ ॐ छन्दोभ्यः स्वाहा, इदं-छन्दोभ्यो न मम ॥ अथ सामवेदाऽऽहुतयः ॥ ॐ दिवः स्वाहा, इदं दिवे न मम ॥ ॐ सूर्याय स्वाहा, इदं सूर्याय न मम ॥ ॐ ब्रह्म-

णे स्वाहा, इदं ब्रह्मणे न मम ।। ओ३म् छन्दोभ्यः स्वाहा, इदं छन्दोभ्यो न मम ।। अथाऽथर्ववेदाऽऽहुतयः ।। ओ३म् दिग्भ्यः स्वाहा, इदं दिग्भ्यो न मम ।। ओ३म् चन्द्रमसे स्वाहा, इदं चन्द्रमसे न मम ।।ओ३म् ब्रह्मणे स्वाहा, इदं ब्रह्मणे न मम ।।ओ३म् छन्दोभ्यः स्वाहाः, इदं छन्दोभ्यो न मम ।। ओ३म् प्रजापतये–स्वाहा, इदं–प्रजापतये ।। ओ३म् देवेभ्यः-स्वाहा, इदं-देवेभ्यः ।। ओ३म् ऋ–षिभ्यः–स्वाहा, इदं–ऋषिभ्यः ।। ओ३म् श्रद्धायै–स्वाहा, इदं–श्रद्धायै ।। ओ३म् मेधायै–स्वाहा, इदं-मेधायै ।। ओ३म् सदसस्पतये—स्वाहा,इदं-सदसस्पतये ।। ओ३म् अनुमतये—स्वाहा, इदमनुमतये ।। ततो भूरादिनवाहुतिहोमं स्विष्टकृतञ्च हुत्वा दिक्पालेभ्यो बलिं दत्वा उत्थाय घृतपूर्णेन स्रुवेण पूर्णाहुतिं दद्यात् ।। ओ३म् मूर्द्धानन्दिवो ऽअरतिम्पृथिव्या व्वैश्वानरमृतऽआजातमग्निम्।
कविं [illegible] सम्राजमतिथिञ्जनानामासन्ना पात्र-